॥ श्रीः ॥

विद्याभवन संस्कृत ग्रन्थमाला

१०८

॥ श्रीः ॥

# पाणिनीय-नाटकम्

रचयिता

व्याकरण-साहित्याचार्य-न्यायतीर्थ-पण्डितराज-

**पं० श्रीगोपालशास्त्री दर्शनकेसरी**

चमोलीमण्डलान्तर्गतज्योतिर्मठस्थ-श्रीबदरीनाथवेदवेदाङ्ग-

महाविद्यालयस्य प्रधानाचार्यः।





चौखम्बा विद्याभवन, वाराणसी-१

THE

VIDYABHAWAN SANSKRIT GRANTHAMALA

108

# PĀṆĪNIYA NĀTAKAM

BY

**Panditarāj Gopālaśāstrī Darśankesarī**

Vyākaraṇ-Sāhityāchārya, Nyāyatīrtha

Prof. Śri Badarinatha Vedavedanga Mahavidyalaya

Jyotirmath ( Chamoli ).

THE

CHOWKHAMBA VIDYABHAWAN

VARANASI-1

1964

॥ श्रीः ॥

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।

तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥'

इति धनञ्जयं प्रति भगवतः श्रीकृष्णवचनात् तत्तेजोंऽशरूपाणां

काशीराजेतिवंशपरम्पराविरुदभृताम् एम. ए.; डी. लिट्;

के. सी. एस. आई., प्रभृतिविविधविरुदावलीविभूषितानां

वाराणसेयसंस्कृतविश्वविद्यालयप्रकुलपतिपदासीनानां

सदासुरभारती-संरक्षणतत्पराणां

**श्रीमतां विभूतिनारायणसिंह-**

महोदयानां करकमलयोः सप्रश्रयमिदं

समर्पणम्

सर्वै राजभिरादृतो मुनिवरो यादृङ्महाशाब्दिकै-

र्भोजाद्यैर्विबुधैः समर्चितनिजग्रन्थः स्वतन्त्रोऽभवत्।

तादृक्पाणिनिनाटकं च सुधियां स्वातन्त्र्यसंवर्द्धकं

काशीराजकरार्पितं विजयतां देशे स्वतन्त्रे सदा ॥



## प्रकृतकृतिविषयकं किञ्चिद्वक्तव्यम्

यस्य प्रसादात् सफलं समेधने
सङ्कल्पबीजं भुवि जातजन्मनाम् ।
मुनित्रयं यस्य दयाब्धिभाजनं
स वन्दनीयो गिरिजापतिः प्रभुः ॥

इह दिव्यधाम्नि श्रीबदरीनाथोपकण्ठे श्रीज्योतिर्मठे उत्तरदेशस्य मुख्यमन्त्रिणां डा० श्रीसम्पूर्णानन्दमहोदयानां सत्सङ्कल्पतस्तदानीन्तन-श्रीबदरीनाथ-केदारनाथमन्दिरसमित्यध्यक्षस्य श्रीव्रजविहारिमिश्र एम० एल० ए० महोदयस्य प्रस्तावेन प्रतिष्ठापितं श्रीबदरीनाथवेद-वेदाङ्ग-महाविद्यालयं सञ्चालयितुं तत्प्रेरणयैव समागतस्य सेन्दुप्रकाशोपाध्यायस्य मे मनसि सहसैकस्मिन् शुभावसरेऽयं सङ्कल्पाङ्कुरोद्गमोऽभूद् । यन्मदीयपाणिनि-प्रशस्ति-पुस्तकस्याभिनयात्मकमपि यदि रूपं स्यात्तर्हि तद् दृश्यकाव्यतया सर्वेषां साक्षाच्छिक्षाप्रदमतिप्रशस्तं बहूपयोगि सर्वान्तेवासिहृदयोद्ग्राहि च स्यादिति ।

स एव संकल्पाङ्कुरोऽद्य महानटराजराजस्य भगवतो महेश्वरस्य प्रसादाद् दिव्यनव-दृश्यात्मकशाखासंवलितपाणिनिनाटकाख्यकल्पद्रुमतामुपेतोऽभिनययोग्यो भूत्वा विदुषामन्तिके स्वस्वादुफलमुपहरतीति प्रसीदति मेऽन्तरङ्गं स्वसंकल्पं सफलितं विलोक्य । अभिनयान्तर्गतेतिवृत्तस्य संक्षिप्तस्य निवेदनेन स्यात् सुधियामौत्सुक्यपरिमार्जनमिति मनाक् प्रस्तौमि तदपि पुरतस्तेषाम्—

(१) प्रथमे दृश्ये प्रस्तावनामात्रम्। तत्र सूत्रधार-मारिष-कथनोपकथनद्वारकं बालकबालिकाकर्तृकं स्वातन्त्र्यध्वज-वन्दना-गानम्। ततश्च 'इतिपाणिनि'-शब्दार्थज्ञानाय संस्कृतप्रचारगान-पूर्विका दृश्यसमाप्तिः।

(२) द्वितीये दृश्ये पाणिनिप्रवेशोपक्षेपणम्। तत्र ग्रामाध्यक्षमहानन्दपरिषत्स्थविरसूचनया महामुनेः पाणिनिमहोदयस्य महानन्दपरिषदि पाटलिपुत्रनगरे प्रवेशः। तत्र तदष्टकरत्न-परिचयमुपलभ्य महानन्देन तत्प्रचारप्रतिज्ञापनम् पाणिनये च सहस्रनिष्कधर्म्योपहारप्रदानम्। सर्वाङ्गतया तदध्यायिनेऽपि सहस्रनिष्कमुद्रात्मकधर्म्यपारितोषिकप्रदानप्रतिज्ञाप्रख्यापनम्।

(३) तृतीये दृश्ये सुन्दरकमुकुरनामभ्यां द्वाभ्यां राजपुरुषाभ्यां सूचितस्य कात्यायनस्य चन्द्रगुप्तमौर्यसभायां तत्रैव पाटलिपुत्रे प्रवेशः। तेन च पाणिनीयाष्टकगुणप्रमुग्धेन पाणिनौ निजदृढानुरागज्ञापनपुरस्सरं वार्तिकविरचनायाः कल्हारसुरभिवत्सूचना-प्रदानम्। राज्ञा च तस्य सज्जनतया स्वमुखेनैव तदीयराष्ट्रसेवा-कृत्यप्रशंसनम्।

(४) चतुर्थे दृश्ये रैवतकनाम्ना सभल्लुकभट्टेन राजपुरुषेण सूचितप्रवेशस्य पतञ्जलेः शुङ्गसेनापतिपदलाञ्छनस्य पुष्य-मित्रस्य राजपरिषदि पाटलिपुत्रे प्रवेशः, तत्र राजनीतिव्यापृतेनापि पाणिनीयाष्टकगुणविमुग्धेन स्वात्मना तदष्टकभाष्यप्रणयनकथनम्, तस्य च तत्र परिषदि परीक्षार्थं प्रचारार्थं च समर्पणम्। राज्ञा च तस्य प्रचारप्रतिज्ञापनम्। सर्वथा तदध्यायिने सहस्रनिष्कस्वर्ण-मुद्रात्मकधर्म्योपहारप्रदानप्रतिज्ञोद्घोषणम्।

(५) पञ्चमे दृश्ये सनकादिनन्दिकेश्वरवार्तया वैदेशिका-नामीत्सिङ्गादिविदुषां दैशिकानाञ्च राजशेखरादीनां शालातुरग्राम-

सभायां प्रवेशप्रख्यापनम्। तेषाञ्च सभाप्रविष्टानां तदष्टकगुण-प्रख्यापनपूर्वकं पाणिनिप्रतिभाप्रशंसनम्।

(६) षष्ठे दृश्ये धारानगरीयबालिकाभिः सूचितस्य भोज-राजस्य परिषदि पाणिनीयनाटकाभिनयप्रख्यापनम्।

(७) सप्तमे दृश्ये श्रीभोजराजघोषणानन्तरं कुविन्दकवित्व-कीर्तनम्। तत्रैव तत्सभाविदुषां कियतां पाणिनिसूत्रकृत्य-प्रशंसनम्, राज्ञापि तत्र मुनौ स्वानुरागवर्णनेन सहैव सरस्वती-कण्ठाभरणग्रन्थप्रणयनवृत्तवर्णनम्।

(८) अष्टमे दृश्ये बालिकाबालकैस्सह राजपुरुषवार्तया सूचितानां जयादित्यादीनां स्वर्गादुपेत्य बौद्धराजस्य परिषदि स्वस्वाभिप्रायनिवेदनम्। पूर्वसूचितानामेव स्वर्गादुपेतानां हरदत्तादिनागेशान्तविदुषां वैदिकसनातनधर्म-संरक्षणपरस्य दाक्षिणात्यराजस्य सभायां प्रवेशेन स्वाभिप्रायप्रख्यापनम्।

(९) नवमे दृश्ये तेनैव राजपुरुषेण तत्रैव सूचिताया भारत-मातुः प्रवेशः। तस्या मुखेनैव स्वातन्त्र्य-संरक्षणकर्तव्यपालनादि-शिक्षोपदेशविधिः। भरतवाक्यरूपतः पाणिनीयप्रपाठनप्रद्योता-भिधानम्।

नाटकस्यास्य वैशिष्ट्यमिदं यन्नवदृश्यात्मकस्यापि एतस्य यावदपेक्षितस्यैव द्वित्रस्य चतुःपञ्चस्य पञ्चषस्यैव दृश्यस्याभिनयः कर्तुं शक्यते दृश्यविलोमतोऽपि संक्षेपतोऽपि यथा सौविध्यं दृश्यपात्रविषयादिसर्वाङ्गसंक्षेपेणापि यथावसरमभिनेतुं शक्यते। (पार्यते) इति धियैव दृश्यानां पात्राणां विषयाणाञ्च विन्या-सोऽस्मिन्नभिनये विहितोऽस्ति।

अभिनयकल्पद्रुमस्यालवालनिर्माणसेकसंरक्षणसंवर्द्धनादिप्रचुरं प्रयत्नसाहाय्यमाचरतां विदुषां मान्यानां सुहृद्वर्याणामाश्रितानाञ्च

ससाधुवाद-धन्यवाद-कृतज्ञताशीर्वादप्रदानमप्येकमावश्यकं कृत्य-मिति तदपि समासतोऽभिधेयमेव ।

सर्वप्रथमम् अभिनयेऽस्मिन्नन्यकवीनां यत्र तत्र प्राक्तनं पद्यं संगृहीतमिति तेभ्योऽभिनन्दनं सश्रद्धं समुपहृत्य तदनु—

भारतीयमर्यादासंरक्षकाणां सद्ब्राह्मणचतुर्वेदाभिज्ञानां विद्वद्वराणां भूतपूर्वोत्तरप्रदेशमुख्यमन्त्रिणां सम्प्रति राजस्थानप्रदेश-राजपालानां महामहिम-डॉ० श्रीसम्पूर्णानन्दमहोदयानां कृ हार्दं साधुवादं प्रदायैवान्तरात्मा मे विश्रान्तिं लभते ये हि अभिनयस्यास्य प्रशस्तिप्रदानेनानुगृहीतवन्तो मामिति ।

श्रीबदरीनाथ-वेद-वेदाङ्ग-महाविद्यालयस्य वार्षिकोत्सवावसरेऽभिनय-खुरलीकरणसाहाय्यमाचरतां वेदान्ताचार्य-श्रीमदिन्दुप्रकाशोपाध्याय-ज्यौतिषाचार्य-श्रीभक्तरामथपलियाल-साहित्याचार्य-श्रीदेवीप्रसादपन्तादिप्राध्यापकवर्याणां पात्रभूमिकात्वमाश्रितवतां विद्यालयान्तेवासिनाञ्च कृतज्ञतां बिभर्मि ।

ततश्च वाराणसेयानां श्रीब्रह्मदत्तजिज्ञासुमहोदय-साहित्याचार्य श्रीगौरीनाथपाठकप्रवर—श्रीमदनन्तरामशास्त्रिफडकेमहोदयानां विविधसाहाय्यमादधतां कृतज्ञतामावहामि ।

विशेषतश्च डा० वासुदेवशरणाग्रवालमहोदयानां नाटकेतिहास-वृत्तसंशोधनेन भोजराजीय-दृश्यप्रवेशोपदेशेन तत्रत्यपात्रादि-सामग्री-संग्रहप्रदानेन बहूपकुर्वतां बिभरामि भृशमधमर्णताम् ।

अभिनयस्यास्य मुद्रणक्षमाकारप्रदानेनोपकारमाचरतां पौड़ी-गढवालमण्डलान्तर्गतधनकग्रामवासिनां व्याकरणसाहित्यशास्त्रि-पदभाजां श्रीशिवकुमारशर्मणां बहुगुणमहोदयानां तथा न्याया-चार्यश्रीभैरवनाथपाण्डेयमहोदयानां विद्यालयप्राध्यापकानां कृत-

ज्ञताप्रकाशनेन सहैव स्वोभयाभ्यां चिरञ्जीविभ्यां श्रीश्रीकेशरि-कृष्ण-श्रीबन्दीकृष्णत्रिपाठिभ्यां तद्धर्मपत्नीभ्यां च यथाक्रमं श्रीदक्षापराख्यायै श्रीमत्यै दमयन्तीदेव्यै संस्कृतापराख्यायै श्रीमत्यै सरस्वतीदेव्यै, कविताशिक्षालय-विदुरपुर-वाराणसीस्थ-श्रीसरयू-प्रसादशास्त्रिद्विजेन्द्राय विनयावनतश्रीरामचन्द्रझाव्याकरणाचार्याय च प्रूफसंशोधनादिकृते सशुभाशिषं भूयांसं साधुवादं प्रदाय—

सर्वान्ते च सर्वात्मना तस्मै सर्वसाक्षिणे परमेश्वराय—

'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्॥'

इति सपुष्पाञ्जलिं तदीयामाज्ञाम्प्रतिपालयन् विरमामि विस्तरात्

॥ इति शुभम्॥

विदुषां वशंवदः

—गोपालशास्त्री

# पात्र-परिचयः

| | | |
|---|---|---|
| सूत्रधारः | ... | नाटक-स्थापक |
| मारिषः | ... | सूत्रधार का साथी |
| ग्रामाध्यक्षः | ... | ग्रामीण सभापति |
| परिषत्स्थविरः | ... | राजसभा का सम्मानित वयोवृद्ध |
| प्रतिहारी | ... | द्वारपाल |
| महाराजः | ... | मगध-सम्राट् |
| पाणिनिः | ... | प्रसिद्ध अष्टाध्यायी सूत्रकार |
| महानन्दः | ... | मगध-सम्राट् : चन्द्रगुप्त |
| सुन्दरकः | ... | सम्राट् चन्द्रगुप्त का भृत्य |
| मुकुरः | ... | " " |
| कात्यायनः | ... | प्रसिद्ध वार्तिककार |
| परिषदध्यक्षः | ... | रैवतक : सभा को सजाने वाला |
| भल्लुकभट्टः | ... | रैवतक का मित्र ब्राह्मण |
| महाराजः | ... | शुङ्गसेनापति सम्राट् पुष्यमित्र |
| पतञ्जलिः | ... | सुप्रसिद्ध महाभाष्यकार |
| सनकः, सनन्दादयः | ... | हिमालय के तपस्वी |
| नन्दिकेश्वरः | ... | शिवजी का गण |
| सभाध्यक्षः | ... | शालातुरीयः |
| च्यु-आङ्सिंहः | ... | चीनी यात्री |
| राजशेखरः | ... | काव्यमीमांसाकार |

| | | |
|---|---|---|
| क्षेमेन्द्रः | ... | बृहत्कथामञ्जरीकार |
| सोमदेवः | ... | कथासरित्सागरकार |
| फ्राँजवप्पः | ... | जर्मनी विद्वान् |
| बोधलिङ्गः | ... | " " |
| मोक्षमूलरः | ... | मैक्समूलर |
| मैनियरविलियमांशः | ... | मोनियर विलियम्स : अंग्रेज |
| ह्विटनी | ... | अमेरिकी विद्वान् |
| वाकरनागरः | ... | जर्मनी विद्वान् |
| मुग्धानलः | ... | मैकडानल : अंग्रेज |
| रेणुः | ... | फ्रांसीसी विद्वान् |
| मञ्जुभाषिणी | ... | भोजपुरी बालिका |
| विमर्शिनी | ... | " " |
| अन्यमनस्का | ... | " " |
| प्रत्युत्पन्नमतिः | ... | " " |
| वाग्मिनी | ... | " " |
| उद्दीप्ता | ... | " " |
| गम्भीरनादा | ... | " " |
| राजमन्त्री | ... | महाराज भोज का अमात्य |
| कुविन्दः | ... | जुलाहा |
| महाराजः | ... | राजा भोज |
| रक्षी | ... | सिपाही |
| धनपालः | ... | भोज-राजपण्डित |
| पद्मगुप्तः | ... | " " |
| उव्वटः | ... | वेदभाष्य-रचयिता |
| कालिदासः | ... | संस्कृत के प्रसिद्ध महाकवि |

| | | |
|---|---|---|
| बालिका-बाला: | ... | विद्यालय के छात्र-छात्राएँ |
| राजपुरुष: | ... | सिपाही |
| राज-मन्त्री | ... | बौद्ध-राजा का मन्त्री |
| जयादित्य: | ... | काशिका का रचयिता |
| वामन: | ... | " " |
| जिनेन्द्रबुद्धि: | ... | काशिका-विवरण-पंजिका का रचयिता |
| धर्मकीर्ति: | ... | रूपावतार का रचयिता |
| राजसचिव: | ... | दाक्षिणात्य राजा का मन्त्री |
| हरदत्तपण्डित: | ... | पदमंजरी का रचयिता |
| भट्टोजिदीक्षित: | ... | सिद्धान्त कौमुदीकार |
| वरदराज: | ... | लघुकौमुदीकार |
| नागेश: | ... | शेखर का रचयिता |
| महाराज: | ... | दाक्षिणात्यराजा |
| बालिकाएं तथा बालक | | भारतमाता की स्तुति में सम्मिलित |
| भारतमाता | ... | आदिशक्ति भगवती |



# पाणिनीयनाटकम्

( अभिनयात्मिका पाणिनीयप्रशस्तिः )

## प्रथमं दृश्यम्

### नान्दी-पाठः

वयमिह निजराज्यं लम्भिता यत्प्रसादात्
प्रतिदिनमभिवृद्धिं याम यस्याश्रयेण ।
उपनयतु स दिव्यं भारतीयं गुरुत्वं
प्रसरतु भुवि मेधावृद्धिरध्यायिषु द्राक् ॥ १ ॥

प्रवृत्तं यतः शब्दशास्त्रं प्रशस्तं
गतं वृद्धिमन्यैर्विपश्चिद्वरेण्यैः ।
सुपूर्णं लघुप्रक्रमं सूत्रनद्धं
नमस्यं मनुष्यैर्महर्षित्रयं तत् ॥ २ ॥

सूत्रधारः—अलम्, अलम्, अधिककालकलाकवलनलोलुपेनानल्पजल्पेन, प्रभूतोपस्थितेयं परिषद् अभूतपूर्वं पाणिनीयप्रशस्तिनामकमभिनयम् अक्षिलक्षीकर्तुम् । अहो यथा अभूतपूर्वं भारतेऽधुना स्वातन्त्र्य-संनिधानं तथैवास्य, अभिनयस्यापि असहयोगान्दोलनयुद्धे कारावासम् अधिवसता पण्डितराजेन व्याख्यानवाग्मिना महामहाध्यापक-श्रीगोपालशास्त्रिणा दर्शन-

केशरिणा स्वतन्त्रस्य मुनेः पाणिनेः प्रशस्तिनिबन्धनो निबन्धो निबद्धोऽयमभूतपूर्वो यतो हि—

'युगे पारतन्त्र्यप्रधाने प्रहातो-
ऽन्धकाराद्वृते तत्तपोऽज्ञैर्नवीनैः ।
स्वतन्त्रो मुनिः पाणिनिः पूजनीयः
स्वतन्त्रे युगे भारतीयैः स्वतन्त्रैः ॥'

अये मारिष ! मारिष ! क्वासि ! क्वासि ! शीघ्रमागम्यतां शीघ्रमागम्यताम् ।

मारिषः—अयमागतोऽस्मि । एष आगतोऽस्मि । कोऽस्ति नियोगो भावस्य !

सूत्रधारः—अये मारिष ! किं त्वं स्वतन्त्रनागरिकाणां स्वातन्त्र्यप्रियम् अभिनयमभिनेतुमेवं कालहरणं करोषि ।

मारिषः—भाव ! भाव ! नाहमहेतुकं किञ्चिदभिदधामि ! शृणोतु भवान् 'भारतीयानामस्माकम् अमितानन्ददोऽद्यतनोऽयं दिवसः । अद्य स्वतन्त्रतामहोत्सवो वरिवर्ति । सर्वत्रैव स्वतन्त्रेऽस्मिन् भारतेऽद्य प्रतिनगरं प्रतिग्रामं प्रतिखर्वटं प्रतिप्रतोलि प्रतिपल्लि प्रभातशोभायात्रा जाता । सर्वेऽपि स्वतन्त्रनागरिकाः स्वस्वसद्मनि राष्ट्रियध्वजोद्धूननकृत्यं कृतवन्तः ।

बालिका बालकाश्च राष्ट्रध्वजोत्तोलनं कृत्वा तदीयं गानं गायन्तः प्रतिरथ्यं पर्य्यटन्ति' इति तद्दर्शने मे विलम्बो जात इति ।

सूत्रधारः—साधु मारिष ! साधु, साधु स्मारितवानसि । तर्हि त्वमपि स्वतन्त्रराष्ट्रध्वजगानत एव आरभस्व अभूतपूर्वं स्वतन्त्रं स्वाभिनयम् ।

मारिषः—अये भाव इदन्तु भवतोऽधुना ज्ञापनम् मार्जारस्य पुरतः शिक्य-पातो जातः । यदेव रोगिणे रोचते तदेव भिषजाऽभिहितमिवाभाति । वयं तु एतदेवाभिलषामः । आयान्तु बालिका बालकाश्च वयं सर्वेऽपि भावाज्ञया ध्वजगानं गामहे । ( इति सर्वे गायन्ति )

उन्नमन्भारतस्याद्य भाग्योदये
नव्यभव्याकृतिर्गीयमानोन्नतिः ।
चित्रचक्राङ्कितो राजमुद्राञ्चितो
धूयतां धूयतां जन्मभूमिध्वजः ॥ १ ॥

उन्मदैः शासकैःपादघातैश्चिरं
क्षोभितः कोपितो देशकण्ठीरवः ।
जृम्भते धीरगम्भीरनादैरसौ
वन्द्यतां वन्द्यतामेष देशध्वजः ॥ २ ॥

गान्धिना भारतीयोन्नतैर्मानवै-
यः श्रमः संश्रितो विश्रुतोपक्रमः ।
वर्णयंस्तत्कथामद्भुतां वेल्लितै-
राजतां राजतां राज्यमान्यो ध्वजः ॥ ३ ॥

यस्त्रिभिर्विश्वमूलैर्गुणैरन्वितो
विष्णुना किन्नु चक्रेण संरक्षितः ।
भारतीयैर्भृशं भूतये भावितो
भ्राजतां भ्राजतां भारतीयो ध्वजः ॥ ४ ॥

आहिमाद्रेरथाप्यासमुद्राच्चिरं
पूर्ववङ्गादिगान्धारदेशावधिः ।
स्थापितो मानितो नन्दितो वन्दितो
वन्द्यतां वन्द्यतां वन्दनीयो ध्वजः ॥ ५ ॥

सूत्रधारः—अलमलम् समाप्तं भवतां प्रियं गानम् । तर्हि बहिर्गत्वाऽभिनयस्यास्य कृते स्वस्वकृत्यं कुर्वन्तु ।

मारिषः—तत् किमिति स्पष्टमुच्यताम् । बाला वयं न ज्ञायतेऽस्माभिर्भवतो भूतार्थम् ।

सूत्रधारः—किमन्यत् स्वातन्त्र्ययुगेऽस्मिन् सर्वत्रैव तु 'इतिपाणिनि', 'इतिकात्यायनम्', 'इतिपतञ्जलि' इत्यादिशब्दाः

कर्णगोचरीभवन्ति। तत्कोऽभिप्रायस्तेषामिति बहिर्गत्वा संस्कृतपाठेन विचिन्वन्तु तदभिप्रायम्।

मारिषः—चलत बालकाः चलत। वयं भावाज्ञया 'इतिपाणिनि' शब्दाभिप्रायं संस्कृतं पठन्तो विचिनुमः। इति।

( नृत्यन्तः परस्परं दत्ततालिकावादं गायन्ति सर्वे )

[1]चलत बालकाश्चलत बालकाः
पठत संस्कृतम् पठत संस्कृतम्।
लिखत संस्कृतम् लिखत संस्कृतम्
वदत संस्कृतम् वदत संस्कृतम्॥

शृणुत संस्कृतम् शृणुत संस्कृतम्
हसत संस्कृते हसत संस्कृते।
स्मरत संस्कृतं स्मरत संस्कृतम्
भवतु भारतम् वितत-संस्कृतम्॥
भवतु भारतम् वितत-संस्कृतम्। इति

( गायन्तो निर्गता जवनिकापातेन )

इति प्रस्तावनाभिधं दृश्यं प्रथमम्।



---

१. गीतकं छन्दः 'नरनराश्रये भवति गीतकम्' ( द्वादशाक्षर-पंक्तिः )

# द्वितीयं दृश्यम्

## शुद्धविष्कम्भाङ्कः

( ग्रामाध्यक्षस्य महानन्दपरिषत्स्थविरेण क्वापि मध्येमार्गं सङ्गतिस्तत्र तौ परस्परं संलपतः । )

ग्रामाध्यक्षः—( आत्मगतम् ) अहो ! अयं महानन्दपरिषत्स्थविरो महापण्डित इति नगरे प्रसिद्धिरस्ति । सोऽयमित एवायाति । तदिममेवापृच्छ्यावगच्छामि इति पाणिन्यादिशब्दार्थम् । ( उपसृत्य ) अयि भोः परिषत्स्थविर ! अभिवादयतेऽयं जनो भवन्तम् ।

परिषत्स्थविरः—विजयतां भो विजयताम् भवान् ।

ग्रामाध्यक्षः—भोः परिषत्स्थविर ! भाग्यान्मे भवतोऽत्र भवति दर्शनम् । अतोऽहमेकां जिज्ञासां भवता समाधीयमानामभिलषामि चिरसञ्चिताम् ।

परिषत्स्थविरः—यथेच्छं पृच्छयतां निर्बाधम् ।

ग्रामाध्यक्षः—क्वापि तद्विद्यसंवादे प्रतिवादिभूमिकां गतोऽहं ससहचरः वादिप्रवरेणादिष्टोऽस्मि । यद् 'इतिपाणिनि'-शब्दार्थं यूयं विवृणुतेति । तत्को नु भवत्तुल्यो महा-

विद्वान् मे मेलिष्यति। अतः सफलयतु मे मनोरथं चिरसञ्चितमिममधुना स्वश्रुख-मधुनाऽमुना।

परिषत्स्थविरः—अयि भोः शब्दोऽयम् 'अव्ययं विभक्ति' २।१।६ इत्यादिपाणिनिसूत्रेणैव शब्दप्रादुर्भावेऽर्थे समासात् सम्पाद्यते। पाणिनिशब्दस्य लोके प्रादुर्भावः प्रकाश इत्यर्थः। अर्थात् जगति सर्वत्रैव अहो पाणिनिः! स हि कीदृक् शब्दशास्त्रनिष्णातो विद्यते। धन्यं तस्य वैदुष्यमित्येवं प्रतिजनं तस्य प्रशस्तिः श्रूयते इति। तेन प्रमाणितं हि विषयजातं प्रमाणितं जगति जायते। अयमेवार्थः इतिपाणिनि-शब्दस्य समस्तस्येति।

ग्रामाध्यक्षः—साधु साधु परिषत्स्थविर! साधु विवृतो भवतेतिपाणिनिशब्दार्थः, अस्तु तर्हि सम्प्रति स्वसरणिमनुसरानि?।

परिषत्स्थविरः—अयि शृणु, तवान्यदपि प्रियमादधामि। यदि त्वं पाणिनिप्रियोऽसि तर्हि एतदपि पाथेयं पथि गृह्णन् गच्छ।

ग्रामाध्यक्षः—अनुगृहीतोऽस्मि, अनुग्रहेऽपि अभ्यर्थना कथम्?

परिषत्स्थविरः—सुप्रभातमस्माकं यदद्य महानन्दपरिषदि भगवान् पाणिनिः गान्धारदेशस्थशालातुरग्रामगो दाक्षीपुत्रः शालङ्कायनिर्माङ्गलिक आचार्यः सूक्ष्मेक्षिको महाशाब्दिकः सूत्रकारः पारिषद्यानां दृष्टिपथपथिको भविष्यति, इति ।

ग्रामाध्यक्षः—किमर्थमायातीत्येतदपि सङ्गिरतु सुधासममिदम्मे प्रतिभाति भवद्वचः ।

परिषत्स्थविरः—स हि महामुनिर्महेश्वरादेव लब्धप्रसादोऽनल्पमतिः प्रायः पञ्चषष्टि-महाशाब्दिकानां शब्दशास्त्रं समन्वयेन स्वीयं सर्ववेदपारिषद्यशास्त्रम् अष्टकं पाणिनीयं शब्दानुशासनं सधातुगणपरिभाषापाठलिङ्गानुशासनम् अकालकं व्याकरणं राजपरिषदि परीक्षार्थं प्रचारार्थञ्चोपस्थापयिष्यतीति श्रूयते ।

ग्रामाध्यक्षः—अहो भवता तु सत्यममृतमेव सिक्तं मे श्रोत्रयोः । मम तु महानन्ददोऽयमुदन्तः । इत्यहो मे भाग्यम् , यदद्य पाणिनिमुनिरक्षिलक्षीभवति । धन्योऽहं धन्योऽहमिति नृत्यन्निर्गतः ।

इति विष्कम्भाङ्कः ( शुद्धः )

प्रतिहारी—विजयतां महाराजः। महाराज ! महामुनिः पाणिनिर्महाराजस्य राजद्वारि विराजते।

महाराजः—तर्हि शीघ्रं प्रवेश्यतामभ्यन्तरम्।

( प्रतिहारी पाणिनिना सह 'यथेच्छं गच्छन्तु महामुनय' इत्यभिदधद् द्वार्येव तिष्ठति। )

( ततः गान्धारदेशीयवेशपरिच्छदोपकरणशालिनः पाणिनेर्मन्त्रिपरिषत्परिवेष्टितायां महानन्दपरिषदि प्रवेशः, सर्वे ससम्भ्रमं पश्यन्ति )

पाणिनिः—( प्रविश्य ) विजयतां महाराजः।

महानन्दः—अभिवादयतेऽयं मगधसम्राण्महानन्दो भवन्तम्।

पाणिनिः—ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुष आन्तादापरार्द्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति।

महाराजः—भगवन् केन निमित्तेन अलङ्कृतोऽयं मगधभूभागः, कथञ्च वयं सनाथीकृताः।

पाणिनिः—महाराज! मया हि प्रथमं तक्षशिलाचरणपरिषदि संस्कृताध्ययनं प्रारभ्य ततोऽग्रेऽत्र पुष्पपुरे भगवतो वर्षदेवस्यान्ते वसता सर्वत्राध्ययाधिगमं संविदधता महता परिश्रमेण सर्वामेवावनिमटाट्यमानेन।

महाराजः—अहो अध्यवसायः! ततस्ततः।

पाणिनिः—लोकोपयोगिनां भौगोलिकशिक्षा-साहित्य-सामाजिकजीवन-कृषि-वाणिज्य-व्यवसाय-मुद्रा-तौल-मानोन्मानप्रमाण-परिमाण-सैन्य-शासन-राज्य-मन्त्रिपरिषद्-यज्ञ-पूजा-देव-दानव-रजक-नर्तक-गायक-वादक-तक्षक-लौहकार-कुम्भकार-द्यूत-क्रीडा-व्याध-वैद्यकोत्तमर्णाधमर्णादिसर्वविषयाणां सम्बन्धे समागतानां सर्वेषां शब्दानाम्।

महाराजः—अहो प्रतिभाप्रकाशः! ततस्ततः।

पाणिनिः—विशेषतो जानपद-स्थान-वैदिक-शाला-शाखा-चरण-गोत्र-वंशवाचिनां शब्दराशीनां संग्रहं विधायेदं शब्दानुशासनं पञ्चषन्यूनचतुःसहस्रसूत्रक्रमं लक्ष्यलक्षणात्मकमुत्सर्गापवादन्याय-विजृम्भितमाधुर्यत्वसम्पादकं द्विजत्वमुद्रण-सञ्चिकास्वरूपं सर्वलोकव्यवहार-शिक्षकमतिसंक्षिप्तं गुर्वर्थं निबद्धम्।

महानन्दः—साधु कृतं भवद्भिः। ततस्ततः—

पाणिनिः—तदद्याहं सम्राजः परिषदि समुपस्थाप्य भृशमेतस्य सपरीक्षं सर्वथा सर्वत्राविहतं प्रचारं कामये।

महानन्दः—साधु चिन्तितमाचार्य्यैः। ततस्ततः।

पाणिनिः—अन्यच्च महाराज! यथा सम्प्रति संस्कृतभाषा लोकभाषा राष्ट्रभाषा राजभाषा च विद्यते। तथैव मयापि-दूराद्धूते च ८।२।८४, विभाषा पृष्टप्रतिवचने हेः ८।२।९३, आम्रेडितं भर्त्सने ८।२।९५, इत्यादीनि स्वराभिव्यञ्जनव्यवस्थापकानि सूत्राणि प्रणीतानि।

महाराजः—अहो भवद्भिस्तु—'अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं, मन्ये। किमन्यदवशिष्यते॥' ततस्ततः।

पाणिनिः—महाराज! किं बहुना—समासतः श्रूयताम्।

संज्ञासूत्रचयं दधे प्रथमके-
ऽध्याये द्वितीये द्वयो-
रङ्घ्योः प्रोच्य समाससूत्रनिचयं
त्र्यङ्घ्रौ विभक्त्यर्थकम्।

एकत्वं सनपुंसकं प्रकृतिजा-
देशादिलुक् तुर्यके
धातोः प्रत्ययतद्विकारमपि चा-
ध्याये तृतीयेऽभ्यधाम् ॥ १ ॥

तुर्ये स्त्रीत्वमुदीर्य तद्धितविधिं
चापञ्चमं प्रोक्तवा-
नन्ते प्रत्ययमेव पञ्चमभवे
पादे समासान्तगम् ।

द्वित्वं सम्प्रसृतिं ससन्धिमवदं
षष्ठाद्यपादात् स्वरान्
पूर्वेऽलुक् त्रिक आनङादिविविधं
पूर्वप्रकृत्या विधिम् ॥ २ ॥

महानन्दः—अहो पाण्डित्यं ! ततस्ततः ।

पाणिनिः—

षष्ठान्तोदयसप्तमान्तमवदं
सर्वं तमाङ्गं विधिं
दीर्घासिद्धविधिं भसंज्ञकविधिं
सम्प्रोच्य षष्ठान्तिमे ।

सप्ताद्ये किल प्रत्ययस्य विविधा-
देशं नुमाद्यभ्यधां
वृद्धीद्तिङ्सुबुपाधिकृत्यभवदं
सप्तद्वितीयेऽङ्घ्रिके ॥ ३ ॥

आद्यैजादिकवृद्धिमाद्यपरयो-
र्द्विष्ठं धुगादित्रिके
ह्रस्वाद्यागमिकं थुगादिविविधं
चाभ्यासिकं तुर्यके ।

द्वित्वं सर्वपदे पदाधिकृतिर-
ष्टाद्येऽङ्घ्रिके वैदिकं
त्रैपादी तु सपादसप्तकभवे
सूत्रव्रजेऽसिद्धिका ॥ ४ ॥

महानन्दः—अहो सूत्रविन्यासवैदुष्यम् ! ततस्ततः ।

पाणिनिः—

अध्यायान्तमुपैति सांहितविधिः
सूत्रात् तयोर्व्वावचि
द्व्याद्यङ्घ्रौ तु नलोपवादिषणकृत्
सूत्रव्रजं प्रक्रमात् ।

आश्चर्यं समुदेति पाठकचये
सूक्ष्मेक्षिकाया मम
सूत्राध्याहृतितोऽनुवृत्तिविधितः
सूत्रार्थं एति स्फुटम् ॥ ५ ॥

महानन्दः—अहो चमत्कारः ! भवद्भिस्तु ।

ध्रुवं धौता गिरः पुंसां
विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं
क्रमसूत्राब्जरश्मिभिः ॥ ६ ॥

ततस्ततः ।

पाणिनिः—अपरञ्च महाराज ! समन्वयधिया मया सर्वेषामेवाचार्याणामभिमतरक्षार्थं कृतोऽस्ति प्रयत्नः । व्युत्पन्नाव्युत्पन्नजातिव्यक्तिशब्दार्थभेदपक्षरक्षापि कृता । पारस्करप्रभृतीनि च संज्ञायाम् ६।१।१५७, उणादयो बहुलम् ३।३।१, जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् १।२।५८, सरूपाणामेकशेष एकविभक्तौ १।२।६४, इत्यादि सूत्राण्येव प्रमाणम् । लौकिकवैदिकशब्दराशिभिर्गण-परिभाषापाठ-लिङ्गानुशासनेन सार्धं

सर्वद्वीपद्वीपान्तर्गतशब्दराशिसिद्धये सहस्रद्वयधातुसंग्रहोऽपि विहितः ।

महानन्दः—अहो सूक्ष्मेक्षिका भवताम् ! ततस्ततः ।

पाणिनिः—महाराज ! किं बहुना एवं पञ्चपाठीत्याख्यया प्रसिद्धस्य सर्वाङ्गपूर्णस्यास्य ग्रन्थरत्नस्याध्ययनाध्यापनं क्रमपाठेनैव सौविध्यसाधकं स्यादिति मे हार्दम् ।

क्रमोपबन्धेऽप्यथ लाघवे मम
तपः प्रकर्षप्रतिभापरिश्रमौ ।
विलोकयन्तो मुदिता महाधियः
प्रशीलयन्तः प्रभवन्तु शाब्दिकाः ॥ ७ ॥

महानन्दः—अहो भवद्भिः सागरो गागरे सम्भृतः । अहन्तु भवज्ज्ञानगरिम्णा चमत्कृतोऽस्मि । अहो एवंभूतस्य ग्रन्थरत्नस्य का परीक्षा ? किं सूर्योऽपि दीपेन दृश्यते ? आं, मद्धस्तेऽस्य प्रचारविधिरिति ममापि भाग्यसम्पत् । अयि मन्त्रिन् ! ग्रन्थरत्नस्यास्य भूयसीः प्रतिलिपीर्विधाप्य सर्वत्रैव साम्राज्ये शिक्षासंस्थासु च प्रेषणप्रबन्धं कारयतु भवान् । महामुनयेऽस्मै सहस्र-

स्वर्णमुद्रा धर्म्यमुपहरतु। सर्वत्र साम्राज्ये राजघोषणाञ्च प्रसारयतु। यदस्य ग्रन्थरत्नस्य सर्वाङ्गतयाऽध्येता सहस्रस्वर्णमुद्रया पुरस्कृतो धर्म्यहारी स्यादिति।

( सजयध्वनिः पुष्पवृष्टिर्यवनिकापातेन निर्गमस्तत्रैव मन्त्रिणा पाणिनिहस्ते पुरस्कारसमर्पणकृत्यमपि निर्गमात् पूर्वमेव स्यात्। )

इति पाणिनिपुरष्कारप्राप्ति द्वितीयं दृश्यम्।



## तृतीयं दृश्यम्

( ततः प्रविशतः सुन्दरकमुकुरनामानौ राजभृत्यौ परस्परं संलपन्तौ )

सुन्दरकः—किं भो मुकुर ! त्वं तु यथार्थनामासि । त्वया तु सर्वेषामेव प्रतिकृतिर्गृह्यते । अस्ति किमपि प्रतिबिम्बितमद्य त्वयि ?

मुकुरः—कथन्न यद्यहं सत्यं मुकुरोऽस्मि । तर्हि, अवश्यं मयि वस्तुजातं प्रतिबिम्बते । तच्चाहमन्येभ्यो विवृणोम्येव ।

सुन्दरकः—तर्हि मित्र ! विवृणु किञ्चिद् येन मे कर्णकण्डूतिः कुण्ठिता स्यात् ।

मुकुरः—अहो तर्हि परिवेपय कर्णशष्कुल्यौ मत्पुरतः । अद्य मौर्यवंशीयसम्राजश्चन्द्रगुप्तस्य परिषदि महाविद्वान् वररुचि-श्रुतधर-परपर्यायः कात्यायनदेवो दाक्षिणात्यो वसुदत्तामातृकः सोमदत्तात्मजः कौशाम्बीनगरीगो वार्तिककार उपस्थास्यते । इति जानीहि ।

सुन्दरकः—किमयं करिष्यतीति, अस्य कार्यमपि कथय ।

मुकुरः—त्वन्तु सर्वमेव रहस्यं श्रोतुमिच्छसि । अहं मुकुरोऽपि सन् राजभृत्योऽस्मि । तर्हि कथं सर्वं रहस्यमन्येभ्यः समुद्गिरामि ? ।

सुन्दरकः—अयि मुकुर ! किं त्वं मामपि अन्यकोटौ क्षिपसि, अहन्तु स्वबन्धोर्मुकुरस्य तामेव मुकुरतामभिनन्दामि या सर्वमपि स्वप्रतिबिम्बितं पार्श्वगेभ्यः सर्वेभ्यः समर्पयति ।

मुकुरः—अयि भोः! त्वन्तु सर्वथा मां प्रतिबध्नासि। अस्तु, तर्हि का गतिः। शृणु अवधेहि च रहस्यमिदं न कुत्राप्यत्र पूर्वमुद्गरणीयम् । स हि कात्यायनदेवः पाणिनिप्रभावप्रेरितस्त्रयष्षष्टिसमेतशतद्वयाधिकचतुस्सहस्रवार्तिकविरचनया पाणिनीयाष्टकं प्रतिचस्कार । तस्यैवाद्भुतस्य स्ववार्तिकग्रन्थस्य परिचयप्रदानेन महर्षिपाणिनौ स्वीयप्रगाढमनुरागं दर्शयिष्यति ।

सुन्दरकः—साधु मुकुर साधु, साधु प्रदर्शिता त्वया स्वादर्शता । अस्तु, तर्हि सम्प्रति आवयोः कर्तव्यकर्मकालोऽप्युपस्थित इति स्वस्वकर्तव्यकर्मणि प्रवर्तावहे ।

( इति निष्क्रान्तौ )

( विष्कम्भाङ्कः शुद्धः )

( ततः प्रविशति कात्यायनो दाक्षिणात्याचकनोष्णीषनाग-
पुरीयप्रावारकोपानत्परिवेष्टितवेशो मौर्यवंशीय-
सम्राट्चन्द्रगुप्तसभायाम् । यत्र स्वमन्त्रि-
गणपरिवेष्टितो मौर्यसम्राट् सिंहा-
सनासीनो विराजते । )

प्रतिहारी—विजयतां महाराजः । महाराज ! स हि दाक्षिणात्यः श्रीकात्यायनाभिधानो महाविद्वान् राजद्वारमलङ्करोति महाराजं दिदृक्षुः ।

महाराजः—अविलम्बितं प्रवेशय ।

( द्वारि तिष्ठन्तं कात्यायनं प्रतिहारी सादरमभिधत्ते )

प्रतिहारी—भगवन् ! महाराजो भवन्तं प्रतीक्षते, प्रविशतु यथेच्छं त्वरितम् ।

कात्यायनः—उपसृत्य विजयतां महाराजः ।

महाराजः—अयमभिवादयते मौर्यसम्राट् चन्द्रगुप्तो भवन्तम् ।

कात्यायनः—

संस्कृताभ्युदयं कुर्वंस्तद्विदश्च समर्चयन् ।
चिरञ्जीव्या महाराज ! पुत्रपौत्रैः सबान्धवैः ॥

महाराजः—(उत्थाय परिषदभिमुखो भूत्वा) अये पारिषद्याः ! महाविद्वानयं कात्यायनदेवो मया सह गतेऽहनि

कृतालापोऽभूत् । अनेन स्ववैदुष्यबलान्महती राष्ट्रसेवा कृता विद्यते । परिषदपि महाविदुषोऽस्य समाकलयतु राष्ट्रसेवाकृत्यमिति परिषदि प्रस्तावयितुमयं मया समादिष्टोऽस्ति । ( कात्यायनाभिमुखो भूत्वा ) अयि विद्वन् ! विव्रियताम् स्वाभिमतमिह परिषदि इति मेऽभ्यर्थना ।

कात्यायनः—भो भो विद्वांसः शब्दशास्त्रमर्मज्ञा अन्ये च ये केऽप्यत्र सम्राजः परिषदि समुपविष्टा विपश्चिदपश्चिमा नागरिका दैशिका वैदेशिका वणिजो व्यापारिणो मन्त्रिणो राजपुरुषाः स्त्रियो वा ते सर्वेऽपि सावधानाः शृण्वन्तु । सम्राजा समर्थिताभिप्रायोऽहं सम्प्रति प्रगुणितोत्साहोऽस्मि । तथापि विद्वद्गुणविभूषितायामिह सम्राट्परिषदि मितमेवाभिदधद्भिरमामि विस्तराद् ।

महाराजः—अहो परिलक्षयन्तु पारिषद्या विपश्चितोऽस्याभिधानप्रकारम् ।

कात्यायनः—अहं हि दक्षिणदेशोद्भवोऽपि गान्धारदेशजस्य शालातुरीयस्य महर्षेः पाणिनेराचार्यस्याद्भुतमष्टकशब्दानुशासनं विलोक्य तद्गुणाकृष्टो नितान्तं विमु-

ग्धोऽस्मि । मया हि तदष्टकं परिशीलयता दृढविचार-परामर्शानन्तरं स्वपरोद्भावितशङ्कासमाधानदृशा त्रयः-षष्टियुतशतद्वयोत्तरचतुःसहस्रवार्तिकविरचनया तद्वि-भूषितं विधाय त्रिपुष्पितं चन्द्रतारकवत्प्रतिमण्डितं विहितम् । 'भगवतः पाणिनेः सिद्धम्' । इति हि मे अन्तिमं वार्तिकम् । किं बहुना पाणिनीयाष्टकपरिशी-लनप्रवाहप्रवाहोद्वेल्लितस्य मे शृण्वन्तु स्वागतागानम्—

अद्भुतं कुहचिदाविरभूत्त-
च्छन्दशास्त्रमवनावृजु यत्राः ! ।
मानवस्य परिपक्वसुमेधा-
स्फूर्तिमाप्लवत आशु समग्रा ॥
मानवीया विचारप्रभा याऽन्तिमा,
सा निबद्धा दरीदृश्यतेऽत्राष्टके ।
इत्थमुच्चैर्विदेशोद्भवा ये बुधाः
फांजवप्येत्सिभाषा वदिष्यन्त्यहो ॥

किं बहुना—

कालभेदादहं सूत्रसंवर्द्धितं
कुत्रचिद्विस्मृतं वा दुरुक्तं क्वचित् ।
दर्शयन् पाणिनीयाशयं वार्तिकै
राष्ट्रसेवां तदीयाध्वना संव्यधाम् ॥

नाहमेवैक एवं पश्यामि। ये केऽपि तदष्टकस्यान्तःप्रवेशं करिष्यन्ति। ते सर्वेऽप्येवमेव तत्प्रभावप्रवाहोद्वेल्लिता नृत्यन्तो गास्यन्ति। इति पुनस्तदेव स्वागतादिगानं कुर्वन्नुपविशति।

( सर्वतस्तालिकावादनं कात्यायनजयध्वनिश्च )

महाराजः—( समुत्थाय ) अये पारिषद्याः श्रुतं! भवद्भिर्महाविदुषोऽस्य राष्ट्रसेवया सह पाणिनिप्रशस्तिगानम्। एवमेव सन्तः परप्रशंसयात्मानं सन्तोषयन्ति। साधूक्तं केनापि—

मनसि वचसि कृत्ये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥

अहो कीदृशमस्य महात्मनः परगुणप्रशंसया स्वात्मप्रख्यापनम्। स्वग्रन्थप्रणयनमपि परग्रन्थगुणप्रकाशनपरतयैवेति स्वकृत्येनास्य राष्ट्रचरित्रोन्नयनपटुता प्रशस्याऽस्माभिरिति त्रिरुद्घुष्यताम्। विजयतां कात्यायनो विजयतां कात्यायनो विजयतां कात्यायनः।

इति कात्यायनपरिचयनाम तृतीयं दृश्यम्।

## चतुर्थं दृश्यम्

( शुङ्गसेनापति-पुष्यमित्रपरिषदध्यक्षस्ततः प्राप्तपरिषत्-सुसज्जाज्ञः परिषदं सुसज्जयितुं प्रविशति । )

परिषदध्यक्षः—अहो ! अहमादिष्टोऽस्मि सम्राजा शुङ्गसेनापतिना श्रीपुष्यमित्रदेवेन । रैवतक ! अद्य पतञ्जलिपादाः परिषदि समुपस्थास्यन्ति । अतस्त्वं परिषत्स्थानं सुसज्जितं कृत्वा मां सूचयेति । तदद्य मे अहोभाग्यं यत्पतञ्जलिसेवायां केनापि प्रसङ्गेन व्यापृतो भवामीति । अतस्त्वरितं तत्र गच्छामि । ( इति त्वरितं गच्छन् मार्गे मिलन्तमपि भल्लुकभट्टं न पश्यति ! )

भल्लुकभट्टः—( मार्गे गच्छन् तं निरुध्य ) कथं रैवतक ! कथमेवं त्वरमाणो गच्छसि यन्मध्येमार्गं मिलितमपि मां न पश्यसि ? किमत्र कारणं यत्तेऽद्य पादौ पृथिव्यां न पततः । त्वन्तु मन्ये, आकाशे समुड्डीयसे ।

रैवतकः—अये ! भल्लुकभट्ट ! अभिवादये अभिवादये भवन्तमभिवादये ( इति त्वरमाण एव गच्छति )

भल्लुकभट्टः—( पुनर्निरुणद्धि स त्वरते इत्येवं हास्यं जनयतः पारिषद्यानाम् ) स्वयं हसन् अये रैवतक ! कथमेवमतित्वरमाणोऽसि यदाशिषमपि न गृह्णासि ।

रैवतकः—अये भल्लुकभट्टक ! नान्तरायो भव । अहन्तु पतञ्जलिदेवाभिधानश्रवणादेवानन्दनिमग्नोऽस्मि न मेऽग्रे पश्चात् किमपि दृश्यते किं त्वं कथयसि ? कथय कथय ।

भल्लुकभट्टः—किं कथयामि त्वं तु शृणोषि एव न हि । पतञ्जलिदेवस्य नाम कथं गृह्णासि । तत् स्फुटं वद । वयमपि तु सर्वे पतञ्जलिदेवपादानुरक्ताः स्मः ।

रैवतकः—तर्हि तवापि तु कर्णामृतमेवेदं, शृणु सावधानम् । अद्य स हि महामुनिः पतञ्जलिरस्माकं महापरिषदि समुपस्थास्यति, इति परिषदं परिष्कर्तुं त्वरितं गच्छामि, इत्यवगच्छ ।

भल्लुकभट्टः—अहो ! स तु भारतप्रसिद्धो महाविद्वान् विद्यते तस्य विषये तु नागरिका अपि सदा पाणिनिप्रसङ्गात् समुद्गिरन्ति—

पाणिनीयं तपो वीक्ष्य मुग्धो मुनि-
स्तच्चकाराद्भुतं भाष्यरत्नं मुदा ।
के वयं मानवास्तत्र वक्तुं क्षमाः
केवलं भाष्यमाशीलयामो हृदा ॥

इत्यादि ।

मयाऽपि पूर्वत एव भूयसी तत्प्रशस्तिः श्रुतास्ति । त्वं तस्यैव सेवायां गच्छसि तर्हि यथेच्छं गच्छ, त्वरिततरं गच्छ, शुभाः सन्तु ते पन्थानः, अहं यथागतमेव गच्छामि । ( इति स्वदिशा निर्गतः । )

रैवतकः—(मनसि) अहो एवं प्रथितप्रभावो महर्षिः पतञ्जलिः, (प्रकाशम्) अस्तु, अद्य तं विलोक्यापि नयने सफलिते स्यातां तावद्राजाज्ञापालनेनैव पतञ्जलिदेवसेवापि भवतीति 'एका क्रिया द्व्यर्थकरी प्रसिद्धा' इत्याभाणकमपि मे सफलायते । अतोऽहं राजपरिषदमिमामेवं विभूषयामि यां समीक्ष्य सर्वे सभ्याश्चमत्कृताः स्युर्मदीयां परिषद्विभूषणकलाञ्चाकलय्य हठान्मे प्रशंसकाः स्युरिति । ( इतस्ततश्चित्रादिना परिषदं संविभूष्य निर्गच्छति यवनिकापातेन । ततः समन्त्रिपरिचारकस्य सम्राजः सिंहासनासीनस्य यवनिकोत्तोलनेन

प्रवेशस्तत्रैव द्वारि स्थितेन पतञ्जलिना कृतालापः प्रतिहारी ।)

प्रतिहारी—( प्रविश्य ) विजयतां महाराजः । महाराज ! पतञ्जलिमहामुनिर्महाराजं द्रष्टुकामो द्वारि विराजते ।

महाराजः—तर्हि त्वरितं प्रवेशय ।

प्रतिहारी—( बहिरागत्य ) चलतु महामुनिर्महाराजः प्रतीक्षते भवन्तम् (इत्युच्चैर्वदन् तं परिषदि प्रवेशयति ।)

पतञ्जलिः—( प्रविश्य ) विजयतां महाराजः ।

महाराजः—एष प्रणमति शुङ्गसेनापतिः पुष्यमित्रो मगध-सम्राट् पण्डितराजम् ।

पतञ्जलिः—

भारतीमुन्नयन् देवः
सञ्जीव्याच्छरदः शतम् ।
प्रजाः समुपालयन् सम्राड्
भूयश्च शरदश्शतात् ॥

महाराजः—केन प्रसङ्गेन सपारिषद्या अद्य वयं पाविताः सकलापि प्रतीक्षते परिषत्पर्युत्सुका भवदमृता-भिधानम् ।

पतञ्जलिः—अस्तु, यदि राजाज्ञैव जाता, तदा का नियन्त्रणा, अयि भोः ! अस्यां हि सम्राजो महापरिषदि सन्ति बहवो महाविपश्चितो राजनीतिचक्रावर्तपरिचिताः । तत्र हि कथमयं विपातनीयः, कथं वाऽयं समुत्थापनीय, इति चिन्ताचक्रे एव दैनन्दिनः कालक्रमः परिक्रामति नीतिविदां विदुषाम् । तथ्यमुदीरितं केनापि कविना—

सत्याऽनृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥

मया हि शुङ्गवंशीयसेनापतेः सम्राजः पुष्यमित्रस्य धर्मराज्यकार्यमुपदिशताऽपि भगवतः पाणिनेराचार्यस्याष्टकशब्दानुशासनं महत् सुविहितं परिशीलयता तद्गुणविमुग्धेन तस्य कात्यायनवार्तिकविशिष्टं महाभाष्यं विरचितं परीक्षार्थं प्रचारार्थञ्चेह सम्राजो महापरिषदि समुपस्थाप्यते । (सर्वतस्तालिकाध्वनिस्तुमुलः ।)

महाराजः—अत्यद्भुतोऽयं भवतोऽध्यवसायः प्रशस्यतरश्च ।

पतञ्जलिः—अन्यच्च वृत्तज्ञस्यानल्पमतेर्माङ्गलिकस्याचार्यस्य सूक्ष्मेक्षिकस्य सर्वोऽपि गूढाशयोऽस्ति विवृतोऽस्मिन् महाभाष्ये। किं बहुना समासेनेदं विदन्तु त्रिदन्तो भवन्तः।

बृहस्पतिः शक्र-सुशिक्षणेऽपि नो-
ऽभवत्समर्थः पदशः प्रयोगतः।
मुनिर्दधौ लक्षणलक्ष्ययोगत-
स्तदद्भुतं व्याकरणं क्रमान्वितम् ॥१॥

तदीयसूत्रस्थपदं सुगृह्णता
स्ववाक्यतः सूत्रपदानुसारिणः।
निजं पदं वार्तिकराजिरञ्जितं
विवृण्वता भाष्यमिदं मया कृतम् ॥२॥

महाराजः—अहो धन्योऽहं, धन्योऽहं, यस्य राजपरिषदि पतञ्जलिमुनिर्महापण्डितः स्वग्रन्थरत्नं परीक्षार्थमुपहरति। एतस्य परीक्षणं तु तदैव समाप्तम्। यदा महतो भूतस्य निःश्वसितवेदराशिवद् भगवत्पाणिनिप्रणीताष्टकस्य विज्ञाननिधेः शब्दानुशासनस्य परिपूर्णम् अष्टाध्यायीद्वात्रिंशत्पादषट्त्रिंशदाह्निकं महाभाष्यं भवद्भिर्विरचितं सर्वैरेव सुधीभिर्नतमस्तकैरङ्गीकृतम्।

अहमेतस्य भूयसीः प्रतिलिपीर्विधाप्य सर्वत्रैव स्वसाम्राज्ये शिक्षासंस्थासु च संप्रेषयामि साम्प्रतम् । अद्यारभ्यैव पाणिनीयं व्याकरणं त्रिमुनि व्याकरणमिति विद्यावंशसंज्ञया समुद्घोषितं स्यात् । पाणिनेरवशिष्टस्य कात्यायनेनाभिधानात्कात्यायनपरित्यक्तस्य पतञ्जलिना परिपूरणात् । तत्रेत्थं सर्वाङ्गपरिपूर्णत्वाद् यथोत्तरं मुनीनां वचनप्रामाण्यमिति प्रामाण्यग्रहोऽपि स्यात् ।

अन्यच्चेयं राजघोषणाऽस्ति जानपदिका जानन्तु यत् यः कोऽपि विद्वान् पतञ्जलिभाष्यावगाहं स्ववैदुष्यं पाणिनीयाष्टके प्रदर्शयिष्यति, तस्मै सहस्रस्वर्णमुद्रात्मको धर्म्यः पुरस्कारः समर्पितः स्यादिति । (साधु साधु, विजयेतां पतञ्जलिमहाराजौ इति जयघोषेण सह पुष्पवृष्टिरभ्यन्तराद्बहिश्च । )

इति पातञ्जलपुरष्कारं नाम चतुर्थं दृश्यम् ॥



## पञ्चमं दृश्यम्

( शुद्धविष्कम्भाङ्कः )

( हिमाञ्चलेऽलकनन्दानदीपरिसरे तप्तकुण्डमण्डिते तपोवने कृताश्रमाः सनकादयः सिद्धा यदृच्छयोपनतं नन्दिकेश्वरं वीक्ष्य परस्परं संलपन्ति । )

सनकः—अरे भ्रातरः ! अहो भाग्यमस्माकं यदद्येह भगवान् नन्दिकेश्वरो यदृच्छया दृष्टिपथपथिको भवति । तदहमिमं पाणिनेरष्टकसम्बन्धे स्वमनोगतं पृच्छामि । भवन्तोऽपि शृण्वन्तु ।

सनन्दनादयः—बाढं बाढं वयं समर्थयामः प्रस्तावमिमम् । भवान् ! यथेच्छं पृच्छतु । वयमपि चिरादुत्सुका अत्र विषये । ( सनकादयः सर्वे तं प्रणमन्ति स हि स्वाशिषं प्रयुञ्जन् तान् कुशलं पृच्छति । )

सनकादयः—वयं सनकादयो भवन्तमभिवादयामहे ।

नन्दिकेश्वरः—सनकादयः ! समेधतां भवतां जगदुपकारभावः । अपि कुशलं श्रीमताम् ?

सनकादयः—भवद्दर्शनात्सर्वं कुशलं नः। भगवन्! वयं पाणिनेरष्टकसम्बन्धे जिज्ञासवः।

नन्दिकेश्वरः—तर्हि विवृणुत जिज्ञासामहमपनेष्यामि ताम्।

सनकादयः—इयमेव सा, यदद्भुतस्य ज्ञाननिधेस्तस्य ग्रन्थरत्नस्य विषये भविष्यति किं भविष्यतीति।

नन्दिकेश्वरः—अहो! साधु स्मारितवन्तो भवन्तः शृण्वन्तु।

नृत्तावसाने नटराजराजो
ननाद ढक्कां नव पञ्च वारान्।
उद्धर्तुकामः सनकादिसिद्धा-
नेतद्विमर्शे शिवसूत्रजालम्॥

इत्यादि कारिकाव्याख्यानन्तु मे भवन्तो जानन्त्येव। तेनैव सह 'पाणिनीयं महत्सुविहितम्।'

'अनुपाणिनीयं देवः प्रावर्षत्।' इत्यादि प्रशस्तिवादमपि। स्वतपोभिरवगच्छन्त्येव। तथैव सर्वमपि जागतिकं प्रपञ्चं स्वतपःप्रभावाज्जानन्तोऽपि भवन्तो मन्मुखाच्छ्रोतुमिच्छन्ति। अस्तु, तर्हि अहमपि स्वश्रोत्रं तर्पयितुकामो व्याहरामि विस्तरात्तर्पयन्तु स्वान्तरङ्गं भवन्तः।

सनकादयः—ओमवहिताः स्मः।

नन्दिकेश्वरः—महर्षिपाणिनिप्रभावप्रभाविता बहवो विपश्चिदपश्चिमा यात्राप्रसङ्गेन तदीयाभिजननगरं शालातुरं गत्वा तदितिवृत्तं संगृह्य तत्र प्रतिष्ठापितां प्रस्तरमयीं तद्विशालमूर्तिंश्चाक्षिलक्षीकृत्य स्वात्मानममितं पावयिष्यन्ति। यत्र चीनयात्री च्वाङ्गसिंहः (मोक्षाचार्यः) (श्यू आङ् सिंहः) तत्र गतः सम्यक् स्वहृदयोद्गारं तद्विषयकं विवरिष्यति। इतरेऽपि भारतीया ग्रन्थकर्तारो यथा राजशेखरः, सोमदेवः, क्षेमेन्द्रश्चेति। अन्येऽपि पाश्चात्त्या विपश्चितो यथा क्राँजवप्पः, वोथलिंट्को मोक्षमूलरभट्टश्चेति सर्वेऽपीमे शर्मण्यदेशगाः। इंग्लैण्डदेशीयो मोनियरविलियमः नागलोकामेरिकास्थो ह्विटनीनामा मनीषी। भूयोऽपि शर्मण्याभिजनौ सुधियौ कीलहौर्न-वाकरनागरौ फ्रांस-पेरिसस्थितो-रेणुश्चेत्यादयो भूयांसो विद्वांसो निजमनीषानुरूपं पाणिनिपरिचारका भविष्यन्ति। पाणिनिनाटकप्रसङ्गतश्चेमे कियन्तः स्वर्गतोऽपि तत्रोपस्थास्यन्ते।

सनकादयः—अहाहा! भवद्भिरामृतपानेनाप्यायिता वयं बहूपकारं बिभृमः। अहो! अद्भुतां भवद्भारतीमाकलयतामस्माकं कालातिपातोऽपि नालक्षितोऽभूत्।

अस्तु, तर्हि अनुजानातु नो जनोऽभिनयनेऽनुषक्तुम् ।
( इति निर्गताः सर्वे जवनिकापातेन । )

( ततः प्रविशन्ति उपविष्टा राजशेखरादयः सुधियः । प्राच्याः पाश्चात्त्याश्च फ्राँजवप्पादयः । तत्रैव पूर्वत एवोपविष्टश्चीनयात्री श्यूआङ्सिंहः सर्वतः पूर्वं वक्ति । ततोऽपरे क्रमेणाभिदधति । सर्वेऽपि स्वस्वदेशवेशपरिच्छदपरिवेष्टिता एव तिष्ठन्ति । एकश्च सभानियामकोऽवसरवक्ता शालातुरीयः सभाध्यक्षो योऽत्र प्रसङ्गप्राप्तौ वक्ति । )

सभाध्यक्षः—( उत्थाय ) इह शालातुरीयसभायां भिन्नकाला भिन्नदेशा अपि प्राच्याः पाश्चात्त्याश्च विपश्चितोऽभिनयकार्य्यवशात् स्वर्गात् समवेता इति धन्यवादार्हाः, तत्र सर्वप्रथमं च्युआङ्सिंहः स्वानुभूतं समभ्यर्थ्यते वक्तुं ततोऽन्ये दैशिका वैदेशिकाः क्रमाद् व्याहरिष्यन्ति ।

च्युआङ्सिंहः—( उत्थाय ) 'अयि भोः सभाध्यक्षा भारतीया विदुष्यो विद्वांसश्च ! वैदेशिकोऽहं चीनदेशयात्री च्युआङ्नामाऽद्य भवतामन्तिकेऽत्र गान्धारदेशे शालातुरीयसभायां स्वागतीकृत्य भवद्भिः समेधितोत्साह आत्मानं धन्यतरं मन्ये । षष्ठे शतकेऽत्र भारतयात्रा-

प्रसङ्गेन समागतस्य मेऽपि महर्षिपाणिनिसम्बन्धे हृदयोद्गारं विवरीतुं कियन्तमवसरं प्रदत्तवद्भ्योभवद्भ्यः कृतज्ञतां प्रकटयामि। अद्याहं पवित्रे पाणिनितीर्थे स्वात्मानं पावयित्वा कृतकृत्योऽस्मि जातः।

सभाध्यक्षः—अहो! वैदेशिकस्यापि भवतो भारतभूमावियती श्रद्धा इति सत्यमभिनन्दनीय एव भवान्।

च्युआङ्सिंहः—इह भारते भ्रमता मया यदनुभूतं तत्सारोऽयमस्ति।

सभाध्यक्षः—यथेच्छमभिधीयताम्।

च्युआङ्सिंहः—यत् पुरा साहित्यमतिविस्तृतमासीत्। कालमहिम्ना ह्रासमुपगते तस्मिन् देवा भुवि समवतीर्य्य तद्ररक्षुः। पुनश्च कालक्रमादतिविस्तृते शब्दशास्त्राडम्बरे पाणिनिमहर्षिरवतीर्य्य सर्वत्र प्रान्तेषु ग्रामं ग्रामं शब्दकोशं सञ्चित्य तदवधि विस्तृतं साहित्यमुन्मथ्य महेश्वरदेवलब्धप्रसादोऽद्भुतमेकं सहस्रश्लोकपरिमितं पाणिनीयाष्टकं ग्रन्थरत्नं जग्रन्थ।

सभाध्यक्षः—भवतामनुभवः श्लाघनीयः। यथेच्छमभिधीयताम्।

च्युआङ्सिंहः—तच्च राज्ञः सभायां सम्मानार्थमुपस्थापितवान्। राजा च सबहुमानं तत्समादृत्य तस्मै सहस्रं

स्वर्णनिष्कं धर्म्यं पुरस्कारं प्रत्तवान् । सर्वाङ्गतस्तदध्यायिने सहस्रमुद्रात्मकं पारितोषिकं राज्यकोशाद् दातुमुद्घोषितवान् । तत आरभ्य भारते वहिश्चास्याध्ययनाध्यापनं निरवच्छिन्नं प्रचलति । अत्र च महर्षेः प्रस्तरमयीं विशालां मूर्त्तिञ्चाक्षिलक्षीकृत्य भृशमाप्यायितोऽहम् । ( इत्युपविशति )

सभाध्यक्षः—साधु साधु ! अद्य वयं भवन्तमतिथिं सत्कृत्य कृतकृत्याः स्मो जाताः । इतोऽन्ये विद्वांसः स्वाभिप्रायं विवरिष्यन्ति ।

राजशेखरः—( उत्थाय ) अयि अध्यक्षमहोदयाः ! राजशेखरोऽहम् नवमशतकवर्ती काव्यमीमांसाप्रणेता । मया पाणिनि-कात्यायन-पतञ्जलिपादानां पाण्डित्यप्रसङ्गे पूर्वमेवोक्तं स्वग्रन्थे—'श्रूयते किल पाटलिपुत्रे शास्त्रकारपरीक्षा—

अत्रोपवर्षवर्षा-
विह पाणिनिपिङ्गलाविह व्याडिः ।
वररुचि-पतञ्जली इह
परीक्षिताः ख्यातिमुपजग्मुः ॥'

( इत्युपविशति )

क्षेमेन्द्रः—( उत्थाय ) एकादशशतके 'बृहत्कथामञ्जरी'-निबन्द्धा क्षेमेन्द्रोऽहं गुणाढ्यकृत 'बृहत्कथे'ति पैशाचिकभाषानिबद्धग्रन्थाधारेण यत्किञ्चित् तथ्यमतथ्यं वोपलब्धवान्। तदेवात्र महताऽऽदरेण स्वबृहत्कथामञ्जर्यां निबद्धवान्नास्ति मेऽन्यद् वक्तव्यम्, शृण्वन्तु सभाध्यक्षाः स-सभासदो मे हार्दम्—

तदद्भुतं व्याकरणं मुनित्रयं
समाज-साहित्य-सुशिक्षयान्वितम्।
सुमेधसा पाणिनिना प्रकल्पितं
ततो बहुज्ञैर्बहुधा विवर्द्धितम्॥

अपरञ्च—

न केवला व्याकरणस्य पुस्तिकाऽ-
ष्टाध्यायिकेयं नयशास्त्रसंहिता।
इमां पठन् पाठक एति पाटवं
सर्वत्र लोकव्यवहारमार्दवम्॥

( इत्युपविशति )

सोमदेवः—एकादशशतके 'कथासरित्सागर'प्रणेता सोमदेवोऽहमतीतानां महामुनिपाणिनि-कात्यायन-पतञ्जलिपादानां जनदन्तकथाधारेण यदुपलब्धवानितिवृत्तम्,

तदेव स्वग्रन्थे ग्रथितवान्, एतत्परीक्षणन्तु दक्षैतिहासिकानां कर्म। अहन्तु तेषां वैदुष्यविमुग्धो नान्यत्ततोऽधिकं विवरीतुमुत्सहे। केवलं कतिपयैस्तदीयप्रशस्तिपद्यैरर्चयँस्तान् विरमामि विस्तरात्।

'अधीत्य शीघ्रं मुनिमार्गतः पुरा
समेऽप्यभूवन् प्रवरा विपश्चितः।
यदज्ञताऽजायत बाल्य एव चेत्
कथन्न जायेत बहुज्ञता ततः॥

विशेषतः—

'क्रमसूत्रततिप्रपाठक-
स्त्रिमुनि-व्याकृतिवित्प्रशस्यते।
क्रमशून्यदिशा परिश्रम-
न्नभिशापेन विहन्यते मुनेः॥

भूतार्थन्तु—

समुद्रवद् व्याकरणं पुरा भवन्-
महेश्वरीयं लघयन्महामुनिः।
चकार तच्छाब्दिकशास्त्रमद्भुतं
यदर्थमाख्याति पतञ्जलिर्मुनिः॥ इति।

( उपविशति )

सभाध्यक्षः—इतोऽग्रे वैदेशिका विद्वांसः क्रमशस्स्वाभिप्रायं प्रस्तोष्यन्ति ।

फ्राँजवप्पः—( उत्थाय ) ऊनविंशशतिकः शर्मण्यदेशवासी फ्राँजवप्पोऽहं महाविदुषः पाणिनेः प्रसङ्गे स्वाभिप्रायं प्रस्तौमि—

स हि धातुप्रत्ययचोगेन शब्दनिर्माणमार्गं यमाविश्चकार तेन वयं सर्वे तदधमर्णाः स्मः । संस्कृत-भाषा हि प्राचीनार्वाचीनभाषानिर्माणेऽमृतसञ्जीवनी-शक्तिं समर्पयति । तत्स्थैर्य्यस्थापकोऽसौ पाणिनिः किं बहुना—

यच्छास्त्रं बहुभिर्दिनैः कतिपयैः
क्रीडामनस्कैरपि-
स्वाचार्य्याश्रमवासिभिः सरलया
रीत्या पुराधीयते ।
गुर्वर्थं परिपूर्णमुत्तमतया
संक्षिप्तकायश्च य-
द्धाऽध्यत्वे तु तदेव वृत्तिसहितं
व्युत्क्रम्य जोघुष्यते ॥

( इत्युपविशति )

बोधलिङ्कः—( उत्थाय ) ऊनविंशशतिकः शर्मण्यदेशस्थो बोधलिङ्कोऽहम् महावैयाकरणस्य पाणिनेर्गणपाठेनाहं भृशमाप्यायितस्तदीयशब्दनिर्माणप्रक्रियया ऽतीवचमत्कृतश्चास्मि । अहो !

यदष्टकज्ञानजुषो विपश्चितः
पुरा भवन्तिस्म बहुज्ञताभृतः ॥
यदीयवाग्वैभव-विस्मृता वयं
विदेशगा अप्यधमर्णतां गताः ॥

( इत्युपविष्टः )

मोक्षमूलरः—( उत्थाय ) ऊनविंशशतिकः शर्मण्यदेशोद्भवो मोक्षमूलरभट्टोऽहम् । गोमतीतीर्थमधिवसतामया संस्कृतभाषोद्धारे बहु प्रयतितम् । मद्दृष्टौ पाणिनिर्विश्वमेधाविषु सर्वोत्तमो मेधावी मनीषी समजनि । अष्टाध्यायी तदीयप्रतिभाया अमरकीर्तिस्तम्भोऽस्ति ।

तथाहि—

पाणिनेः पद्धतिर्माङ्गली सम्मता
वृद्धिरादैजये वृद्धिरादौ मता ॥
तद्दिशा पाठको वृद्धिमासेवते
शीघ्रमेवार्षबुद्धिः सुधीर्जायते ॥

यद्वै सागरसम्भृतातिगहनं
शास्त्रं बृहच्छाब्दिकं,
संक्षिप्तं व्यदधात्तदष्टकमयं
स्वर्थावगत्यै क्रमात् ।
संज्ञासूत्रचयं चकार प्रथमे-
ऽध्याये द्वितीये पुरः,
संक्षेपात्स समाससूत्रनिवहं
पश्चाद्विभक्त्यर्थकम् ॥ १ ॥

धातोः प्रत्यय-तद्विकारमपि चा-
ऽध्याये तृतीयेऽभ्यधात्,
तुर्ये पञ्चमके च तद्धितविधिं
शब्दात्तथा षष्ठके ।
द्वित्वं सांहित-सौवराङ्गिकविधी-
न्द्दिष्टं विधिं सप्तमे,
द्वित्वाद्यष्टमके पदक्रममधा-
दन्ते त्रिपादीविधिम् ॥ २ ॥

( इत्युपविष्टः )

मौनियरविलियमांशः—( उत्थाय ) ऊनविंशशतिक इंग्लैण्ड-देशस्थो मौनियरविलियमांशोऽहं पाणिनीयाष्टकसम्बन्धे

स्वाभिमतं विवृणोमि—यथा वृक्षार्थं बीजं पुष्पार्थं कुड्मलं तथैव संस्कृतभाषार्थं पाणिनेश्चतुस्सहस्रसूत्रकमष्टकं ज्ञेयम्। अस्माकं मते पाणिनिः संस्कृतव्याकरणस्य जनको गण्यते। स हि खशरशशिमित(१५०)वैयाकरणैर्व्याख्याताष्टकोऽस्ति। तत्सदृशः सूक्ष्मेक्षिको न कोऽपि द्वीपे क्वापि जातोऽद्यावधीति निर्विवादम्।

किं बहुना—

कालिदासस्तथाऽन्ये बुधा ये पुरा
शङ्कराचार्य्यवर्य्योऽथ बाणादयः।
पाणिनेः पद्धतिज्ञा अभूवन्निमे
सर्वतन्त्रस्वतन्त्रा महापण्डिताः॥

(इत्युपविशति)

ह्विटनी—(उत्थाय) ऊनविंशशतिको नागलोकामेरिकागो ह्विटनीनामाहं पाणिनीयाष्टकस्य समीक्षात्मकाध्ययनफलमेव मे संस्कृतव्याकरणप्रणयनमिति न विस्मरणीयम्, स्वानुभवो मेऽयं यत्—

प्रक्रमात्सूत्रपाठात्स्वयं पाठकः
सूत्रवृत्तिं विनिर्मात्यहो दृश्यताम्।
आः सुमेधाकरी चाशु बोधाकरी
पाणिनेः पद्धतिर्हापिता हा कथम्॥

(इत्युपविष्टः)

कीलहार्नः—( उत्थाय ) अये सभाध्यक्षाः सभासदश्च ! विंशशतिकः शर्मण्यदेशीयः कीलहार्नोऽहम् । मया हि विंशतिदेशीय-वर्षावधि भारतमधितिष्ठता पतञ्जलिभाष्यावगाहं लघुसंस्कृतव्याकरणं निबद्धम् । मन्मते पाणिनिः—

य आदाववोचच्छिवं वृद्धिशब्द-
मएत्यन्तिमं माङ्गलं सूत्रमाह ।
अहो भाष्यकृद्यं विमुग्धः स्तवीति
प्रयुञ्जन्निजं 'मङ्गलादीनि०' भाष्यम् ॥

( इत्युपविशति )

वाकरनागरः—विंशशतिकः शर्मण्यदेशागारो वाकरनागरोऽहम् । षष्टि(६०)वर्षावधि भारतवर्षमधिवसता पाणिनीयव्याकरणमेव विमथ्नता मया संस्कृतव्याकरणविषये 'ओल्ड इण्डियन ग्रामटिक्' (Old indian grammatic) ( प्राचीनभारतीयव्याकरणम् ) नाम ग्रन्थो ग्रथितः । पाणिनीयव्याकरणाध्ययनाधारमेव मया प्राच्य-पाश्चात्त्य-भाषयोर्भाषाशास्त्रीयनियमा निबद्धाः । मम सम्मतौ—

वृद्धिरादैजिति श्रद्धया सम्पठ-
न्नन्तिमा एति (अ अ इति) सूत्रावधिप्रक्रमात्।
मूलमात्रं महापण्डितो जायते
वेदतुल्यानि सूत्राण्यहो पाणिनेः ॥

( इत्युपविशति )

मुग्धानलः—( उत्थाय ) अयि सभाध्यक्षमहोदया अन्ये च भ्रातरः! विंशशतिको गोमती-तीर्थवासी मुग्धानलोऽहं ( मैग्डानलः ) पाणिनिसम्बन्धे ममाप्यस्ति किञ्चिद् वक्तव्यम्—मया वैदिकव्याकरणं पाणिनीयाष्टकाध्ययनाधारमेव तु निबद्धम्। शब्दरूपाणां सर्वप्रथमं प्रकृति-प्रत्यय-विभागेन विन्यासो भारतीयविदुषा पाणिनिनैव विहितः। तदीयाष्टकं सर्वाङ्गपूर्णमद्भुतं प्रामाणिकं व्याकरणम्। तत्सादृश्यं क्वापीह जगति नोपलभ्यते। किं बहुना—

भद्रं वदामि तदहो शृणुतावधानाद्
यूयं स्वतन्त्रधिषणाः किल भारतीयाः।
सर्वे विदेशिसुधियो बहुशोऽधमर्णा-
स्तत्पाणिनिप्रकृतिप्रत्यय-कल्पनायाः ॥

( इत्युपविष्टः )

रेणुः—( उत्थाय ) वर्तमानशतकः फ्रांसदेशीय-पेरिसनगरगो रेणुरहं स्वात्मानं पाणिनेः परमभक्तं मन्ये। मया हि पाणिनीयाष्टकसम्बन्धे निबद्धानां प्रायः सर्वेषामेव वार्तिकभाष्य-टीकोपटीका-प्रटीका-टिप्पणी-प्रटिप्पणी-पञ्जिका-कुञ्जिकादीनां परिशीलनं कृत्वा वैदिकं व्याकरणं विरचितम्। पाणिनीय-पारिभाषिक-शब्दावली-सम्बन्धेऽपि ग्रन्थो ग्रथितः। शरणदेवस्य दुर्घटवृत्तेरनुवादो मया, मच्छिष्येणापि काशिकावृत्तेरनुवादः फ्रेञ्च-भाषायां विहितोऽस्ति। वयं हस्तोद्यमं व्याहरामः—

ब्रह्मनिःश्वसिता वेदा-
स्तथेयं पाणिनि-स्मृतिः।
आनुपूर्वी यथा वेदे
तथैतस्यामपि ध्रुवम्॥

( इत्युपविष्टः )

सभाध्यक्षः—( उत्थाय ) अहो भवतां दैशिकानां विशेषतो वैदेशिकानां पाणिनिमुनिगतमगाधमनुरागमधिगत्य सर्वेऽपि शालातुरीयाः सभासदः समुद्दीपिताः। अद्य भारतीयं जगद्गुरुत्वं नः प्रत्यक्षीभूतं यद्वैदेशिका देशिका भारतीयं पाणिनिमीदृशं निश्छलं प्रशंसन्ति। मनोस्तत्पद्यमप्यद्य सार्थकं मन्ये।

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥"

इति अद्य धन्या वयं भारतीया येषां पूर्वपुरुष-पाणिनि-विषये वैदेशिकानामियं धारणाऽऽस्ते । वैदेशिका अपि धन्यतमा येऽन्यदेशोद्भवमपि विद्वांसमेवं मुक्तकण्ठं स्तुवन्ति । इत्यहो ! गुणग्राहिता पाश्चात्य-पण्डितानाम् ।

( इत्युपविष्टो जवनिकापातेन सह )

( ततो जवनिकापातेन सर्वे निष्क्रान्ताः )

इति शालातुरीयग्रामसभादृश्यं पञ्चमम् ॥



## षष्ठं दृश्यम्

( ततो भोजपुरीयाः कियत्यो बालिका घटहस्ताः कूपे जलं भर्त्तु गच्छन्ति । परस्परं भोजपुरीभाषया संलपन्ति च )

मञ्जुभाषिणी—ए सखी विमर्शिनी ? कवन बात बा कि अपना नगर में बराबरे बड़का बड़का पण्डित लोगन आवत जात हौंअन। एकर कवन कारन हउवे ? ते हमरा के बताऊ ना ?

( अयि सखि विमर्शिनि ! किं कारणम् ? यदस्माकं नगरे सर्वदा महान्तो विद्वन्तो बहुधा आयान्ति यान्ति चेति । किमेतस्य कारणमिति मां विवृणु । )

विमर्शिनी—ए मञ्जुभाषिणी सखी ? तू हमहीं से काहें पूछत बाड़ू ? अन्यमनस्का से काहें नइखू पूछत !

( सखि मञ्जुभाषिणि ! त्वं मामेव कथं पृच्छसि ? अन्यमनस्कां कथं न पृच्छसि ? )

मञ्जुभाषिणी—का कहत रहलू हा हो, अन्यमनस्का ! अरे ऊ त अन्यमनस्के ठहरलि । तूँ त विमर्शिनी हऊ ।

जइसन नाम तइसने गुणो नु होला। एही से नु कहत्त हई कि तेहीं हमार अभिलाषा पूरन करू।

(किं कथयसि ? अन्यमनस्कां पृच्छेति। अयि सा तु अन्यमनस्कैवास्ति। आं त्वं विमर्शिनी वाढं यथानामा तथागुणासि। अतस्त्वमेव मे जिज्ञासां पूरय।)

विमर्शिनी—(मुस्कराइ के) ए सखी अन्यमनस्का तूँ सुनत हऊ हो, मञ्जुभाषिणी सचहूँ के मञ्जुभाषिणीये हउए। ऊ सब कुछ जनलो पर हमरा से कुछु सूनल चाहत हवे।

(सखि अन्यमनस्के ! शृणोषि, मञ्जुभाषिणी यथार्थतो मञ्जुभाषिण्येवास्ति सा सर्वं जानती अपि मत्तः किञ्चिच्छ्रोतुमिच्छति।)

(ओकरे ओरि मुँह कइके) आछा सखी मञ्जुभाषिणी तूँ बहुत चतुर हऊ। सून ना हम कहत-बानी। अपना नगर के संसार में विख्यात महाराजा भोज के बारे में तूँ त ई पद सुनलहीं होईबू कि—

(तदभिमुखीभूय) शृणु सखि मञ्जुभाषिणि ! त्वमतिकुशलासि। अवधेहि स्वनगराधिपस्य विश्व-

४ पा०

विख्यातस्य सुराज्ञो महाराजभोजस्य सम्बन्धे पद्यमिदन्तु त्वया श्रुतमेवास्ति)—

'कविषु वादिषु वाग्मिषु भोगिषु
द्रविणवत्सु सतासुपकारिषु ।
धनिषु धन्विषु धर्म-धनेष्वपि
क्षितितले नहि भोजसमो नृपः ॥'

एहघरी उनहीं के संस्कृतानुराग से आकर्षित होई के अउरी उनहींके पाणिनीय प्रक्रिया के पण्डिताई से प्रभावित होइके हरघरी धाराप्रवाह से धारा नगरी में बड़का बड़का पण्डित लोग आइले करत हउँअनि । का तू नइखू जानत कि ऊहे महाराज भोजराज के गुण से आकृष्ट विद्वान् लोग आजुओ पधरलेबा ।

( तस्यैव संस्कृतानुरागेणाकृष्टाः, तथा तदीयपाणिनि-प्रक्रिया-विषयक-महावैदुष्येण च प्रभाविता महाविद्वांसः सदैवास्माकं धारानगर्यां धाराप्रवाहमायान्ति यान्ति । इति त्वं किं न जानासि ? त एव महाराज-भोजराज-गुणाकृष्टा विद्वांसोऽद्यापि समुपस्थिताः सन्ति । इति । )

अन्यमनस्का—हं हं ई त हमनीका देखते बानी कि बड़का

चड़का पग्गड़धारी पंडीजी लोग इकट्ठा हो रहलबा त ओह लोगन्ह के नाम हूँ त बतावल करितिसि।

(अस्तु अस्तु एतत्तु वयं पश्याम एव यद् बृहदुष्णीष-धारिणः पण्डितधुरीणाः समवयन्ति। इहाधुना तेषां नामान्यपि तु विवृणु।)

विमर्शिनी—कहु ए मञ्जुभाषिणी ? तोहरे प्रश्न के उत्तर त हम देइये दिहनी, अब एहघरी तूँ पण्डित लोगन्ह के नामो जानल चाहत हऊ ?

(किं मञ्जुभाषिणि! कथय, तव प्रश्नस्योत्तरन्तु मया दत्तम्। किमधुना त्वमेतेषां नामान्यपि ज्ञातुमिच्छसि ?)

मञ्जुभाषिणी—त कवन हर्जा बा ? उन्हनलोंगन के नाम आ गुण बताइ देबू त हमार कनवो नू पवित्र होइ जाई।

(तर्हि का हानिः। एतेषां नामगुणानपि यदि कथयिष्यसि तर्हि अस्माकं कर्णौ पावितावेव भविष्यतः।)

विमर्शिनी—नीमने त कहत हऊ ल सुनना। एगो तिलक-मञ्जरी के लेखक धनपाल पण्डित, दोसर नवसाहसाङ्क-चरित के रचयिता पद्मगुप्त जी, तीसर वाजसनेयी

संहिता के भाष्यकर्त्ता उव्वटदेव, आ चउथा महाराज भोज के संगी तथा राज-सभा के पण्डित कालिदास आइल हँउअन। अउरी अउरी कतने वड़का वड़का विद्वान् लोगन्ह आइल हँउअन। जवने लोगन के हमहूँ नइखीं जानत।

( अस्तु तर्हि शृणुत, तिलकमञ्जरी-ग्रन्थलेखक एको धनपालपण्डित आगतोऽस्ति। द्वितीयस्तु नवसाहसाङ्कचरित-रचयिता पद्मगुप्तः समागतोऽस्ति। तृतीयस्तु वाजसनेयीसंहिता-भाष्यकर्ता उव्वटदेवोऽस्ति। चतुर्थस्तु महाराजभोजस्य परमप्रियः पारिपार्श्विकः प्रसिद्धः राजसभासदस्य-कविः स कालिदास एवास्ति। अन्येऽपि भूयांसो महान्तो विद्वांसः समागताः सन्ति। यानहमपि न परिचिनोमि। )

प्रत्युत्पन्नमति—( बात काटि के ) ए वहिनि विमर्शिनी! तूँ त पुरुषे लोगनमे एगो के बाद एगो के नाम बतावत चल जात हउ, केहू मेहरारुओ के त एगो नाम बतइतू!

( भगिनि विमर्शिनि! त्वन्तु पुरुषेष्वेव एकस्योपरि अन्यस्य नामोत्तरोत्तरं प्रख्यापयसि। कस्याश्चन नार्या अपि तु नामैकं कीर्तय। )

अन्यमनस्का—त मेहरारुअन में हम केकर नाम बताईं कवनो होखे भी त।

( तद् नारीषु कस्या नाम कथयेत्। कापि नारी विदुषी विद्यतेऽपि ? )

वाग्मिनी—( तमकि के ) त का इहँवा कवनो विदुषी मेहरारू हइये नइखे ?

( सङ्गर्जन्ती ) किं तर्हि इह विदुषी नारी नास्त्येव किम् )

अन्यमनस्का—होखे भी त जब प्रसिद्ध नइखे। समाज में जे आगे नइखे आवत ओकर नाम कइसे बतावल जाउ।

( स्यान्नाम यदा प्रसिद्धा नास्ति समाजे सर्वेषां पुरो नायाति चेत् तर्हि कथं सेह कीर्तिता स्यात्। )

मञ्जुभाषिणी—नाहीं बहिनी तूँ लोग अइसन मति समझही वाग्मिनी बहिनि के कहे द लोगनि (ओकरा ओरि होइके) कह हो बहिनि तू कह।

( नहि भगिन्यः नैवं विवदन्ताम् वाग्मिन्यै भगिन्यै

वक्तुमवसरं दत्त। (तदभिमुखीभूय) कथय भगिनि वाग्मिनि त्वं कथय।)

वाग्मिनी—(गर्व के साथ) वाह वाह भारत में त अइसन अइसन विदुषी मेहरारू हो गइल बाड़ी। अउरी एहू घरी में हई। जे बड़का बड़का विद्वान पंडितजी लोगनि के शास्त्रार्थ में मुखिया बनी के निर्णायिका के काम कइले हइस। देखू ना! राजा जनक के दरबार में विदुषी गार्गी रहलि, माहिष्मती पुरी में मण्डन मिसिर के मेहरारू भारती देवी रहलि, ई दूनो देवी के न्यायाधीश के ओहदा मिलिये चुकल बा। राजा जनक के साभा में त वाचक्नवी, गार्गी, कुरु पाञ्चाल आदि सब देशन्हि के प्रसिद्ध प्रसिद्ध विद्वानन्हि के शास्त्रार्थ में मुखिया होइके निर्णय दे चुकलि हइस। एही तरह जगत् के गुरु शङ्कराचार्य अउरी मण्डन मिसीर के शास्त्रार्थ में शंकराचार्य के कहला पर भारती देवी जी बीचबनिया के काम काताना योग्यता से निभवले हउवे। येह से पहिलहूँ आ पाछहूँ मेहारुअन के वैदुष्यके अनेकन्हि उदाहरण मौजूद बाटे। विदुषी विदुला, अश्वघोषा, मञ्जुश्री, महा-विदुषी विज्ञका आदि के नाम संस्कृत के इति-

हास में छिपल नइखे। उनहनी के वैदुष्य अउरी, अथाह ज्ञान के कारन ही भारत के मर्यादा आजुओ विदेशों में फैलल बाटे। (येही बीच में उद्दीप्ता बोलि वइठलि।)

[(सगर्वा) अहो! यूयं किं विवदध्वे। इह भारते तु ईदृश्यो विदुष्यो नार्यः समभवन् साम्प्रतमपि सन्ति। या हि महतां विदुषां शास्त्रार्थे मध्यस्थतां कुर्वत्यो निर्णयं दत्तवत्यः सन्ति। पश्यत—राज्ञो जनकस्य राजपरिषदि विदुषीं वाचक्नवीं गार्गीं तथा माहिष्मत्यां पुर्यां मण्डनमिश्र-सहधर्मिणीं भारतीं देवीम्। इमे देव्यौ न्यायाधीशपदमलङ्कृतवत्यौ व्यराजिषाताम्। राज्ञो जनकस्य सभायां वाचक्नवी गार्गी हि कुरु-पाञ्चालप्रभृति-सर्वदेशीय-प्रसिद्धविदुषां शास्त्रार्थे मध्यस्था भूत्वा निर्णयं दत्तवती। तथैव जगद्गुरु-श्रीशङ्कराचार्य-मण्डनमिश्र-शास्त्रार्थे श्रीशंकराचार्यप्रस्तावतो भारती देवी निर्णायकपदमलङ्कृत्य महत्या योग्यतया तत्र निर्णयमदात्। इत्यतः पूर्वं पश्चादपि नारीणां वैदुष्यस्य भूयांस्युदाहरणानि समुपलभ्यन्ते। विदुषी विदुला, अश्वघोषा, मञ्जुश्री, महाविदुषी विज्जका, इत्येवंप्रभृतयो वहवो विदुष्यो वाङ्मयेतिहासे देदीप्यन्ते। तासां वैदुष्येणागाधबोधेन

चाद्यापि भारतगौरवं विदेशेषु प्रसृतं प्रख्यातञ्चास्ति[1] ।
( एतन्मध्ये एवोद्दीप्ता वक्तुमारभते । ) ]

उद्दीप्ता—हँ हँ हमहूँ विज्जका के खूब जानत हईं । आ ओकर ललकारलो सुनि चुकल बानीं । ऊ त संस्कृत के बहुत बड़का विद्वान् हउवे, दण्डी कवि के भी फटकारी दिहलेह । अउरी साफ शबदन्हि में ललकारे ले कि—

'नीलोत्पलदलश्यामां विज्जकां मामजानता ।
वृथैव दण्डिना प्रोक्ता सर्वशुक्ला सरस्वती ॥'

अर्थात्—नील कमल के नील पखुरियन्हि के तरह नीलवर्णवाली श्यामा हम विज्जका सरस्वती के ना समझि के ही, दण्डी कविजी बेकारे सरस्वती के शुक्ल वर्ण के ( सर्वशुक्ला ) बतवले हउवे । उन्हिको त सरस्वती के श्यामा कहे के चाहत रहल हवे, काहें कि हम त श्यामे हईं, आ हमहीं त सरस्वती हईं ।

---

१. विंशतितमायां शताब्द्यामद्यापि स्वतन्त्रे भारते जाताभिस्तपस्विनीभिः कवयित्रीभिर्विदुषीभिर्जननेत्रीभिश्च माँ आनन्दमयी, पण्डिता क्षमाराव, प्रभावती राजे, विजयालक्ष्मी पण्डित, सुभद्राकुमारी चौहान, महादेवी वर्मा, सुमित्राकुमारी सिनहा, तारा पाण्डेय, विद्यावती कोकिल, इन्दिरा गान्धी, प्रभृतिभिर्विश्वस्मिन् भारतगौरवमक्षुण्णमेव प्रख्यापितमस्ति । ( सम्पादकः )

(अहो ! अहमपि विज्जकां जानामि तस्य विद्वदाह्वान-मपि श्रुतवत्यस्मि । सा तु संस्कृतवाङ्मयस्य प्रकाण्डपण्डितं दण्डिकविमपि भर्त्सयति तथा स्फुटं तमाह्वयते, यत्—

'नीलोत्पलदलश्यामां······सर्वशुक्ला सरस्वती ॥'

श्लोकार्थः—(इन्दीवरस्य नीलपत्रवत् श्यामवर्णां मां विज्जकारूपां सरस्वतीम् अज्ञात्वैव दण्डी कविः सरस्वतीं शुक्लामवर्णयत् । तस्य तु उचितमासीत् यत् स 'सरस्वती'-श्यामेत्यकथयिष्यत् तदा साधु अभविष्यत् । यतो हि अहं तु श्यामास्मि, अहमेव तु सरस्वती अस्मीति ।)

गम्भीरनादा—वाह वाह बहिनी वाग्मिनी और उद्दीप्ता दूनों विदुषी विज्जका के सरस्वती बताइ के हम लोगन्हि के उत्साह के दुगुना कई दीहलिस । धन्य ह धन्य ह ! अइसने सुधीर मेहरारू त देश के भूषण होइहें ।

(साधु, भगिनी साधु, वाग्मिनी तथोद्दीप्ता चेतीमे उभे अपि विदुषीं विज्जकां सरस्वतीत्वेन स्तुवत्यौ अस्माकमुत्साहं द्विगुणितं कृतवत्यौ । धन्यं धन्यमहोभाग्यम्, एतादृश्य एव तु नार्यो देशस्य रत्नानि गीयन्ते ।)

मंजुभाषिणी—हें हें देख ना येह बहिनिन के झगड़ा से

त हमार प्रश्नवे विलीन होइ के भागत चली जा रहल बाटे ।

( अहो ! आसां भगिनीनां विवादे तु मम प्रश्न एव विलीनो भूत्वा प्रवहमानो दृश्यते । )

विमर्शिनी—त का अबहींयो तोहार प्रश्न बाकिये रहि गइल हवे ?

( किमधुनापि तव प्रश्नोऽवशिष्ट एवास्ति ? )

मंजुभाषिणी—तव का ?

( अथ किम् ? )

विमर्शिनी—त पूछत काहें ना हऊ ? जवन पूछल चहबू तवना के उत्तर देबे के हमत तैयारे बानीं ।

( तर्हि पृच्छसि कथन्न ? पृच्छ यदपि तेऽभीष्टम् अहन्तु उत्तरितुं सन्नद्धैवास्मि । )

मंजुभाषिणी—बहिनि विमर्शिनि ! तूँ त अपने भोजराज महाराजो के पाणिनि प्रक्रिया के प्रकाण्ड विद्वान् बतवले हऊ । ऊ कइसे ?

( भगिनि विमर्शिनि ! त्वन्तु स्वमहाराजं श्रीभोजराजं पाणिनीयप्रक्रियाया अपि विशिष्टं विद्वांसं कथयसि तत्कथम् ? )

विमर्शिनी—आरे, हम लोगनि के महराज पाणिनीय प्रक्रिया के बहुत प्रकाण्ड पण्डित हउअनि। ऊ 'सरस्वतीकण्ठाभरण' नाम के एगो दोसर बड़ा अद्‌भुत पाणिनीय व्याकरण के ग्रन्थ लिखले हउवे। जवन साहित्य-सरस्वतीकण्ठाभरण से भिन्न बाटे। तोंहे कौतुक होखे त आजूकाल्ह पाणिनीय नाटक हो रहलबा। ओही में महाराज अवरी उन्हीं कर दर्बारी पण्डित लोग भाग लेत बाटे। उहाँ जाये से तोहरा आकी बाकी (अशेष विशेष) सभे मालूम होइ जाई।

(अहो अस्माकं महाराजः 'पाणिनीयप्रक्रियाया मर्मज्ञो महाविद्वान्' इति सर्वत्र प्रगीयते। तेन हि सरस्वतीकण्ठाभरणं नामाद्वितीयमद्भुतं पाणिनीयव्याकरणं ग्रन्थरत्नं निबद्धम्। यच्च साहित्य-सरस्वतीकण्ठाभरणतो भिन्नमेव। यदि ते कौतुक चेदद्यत्वे इह पाणिनीयनाटकमभिनीयते। तत्र स्वयं महाराजस्तदीयाः सभासदस्या अपि भूमिकाभाजो भवन्ति। तत्र गतागतं कुरु। त्वं सर्वस्याऽप्यशेषविशेषस्य इतिवृत्तस्य अभिज्ञा भविष्यसीति।)

मंजुभाषिणी—ठीक कहत हउवे अइसहीं करबी।

(बाढमेवमेव करिष्यामि।)

अन्यमनस्का—अरे तूँ लोगन बात के बतङ्गण मे फँसल हऊ। कुछु खबरो ह। बहुत देर होइ गईल। चल चल, पानी भरि के जल्दी जल्दी घर चलल जाई।

( सर्वा निर्गता जवनिकापातेन )

( अये यूयमनल्पजल्पनायामेवं व्यापृताः स्थ यत्सर्वं विस्मृत्य वार्तामेव चालयथ। किमपि नहि चिन्तयथ बहुविलम्बो जातः। चलत चलत, जलं भृत्वा गृहं चलामः। ( इति सर्वा निर्गताः जवनिकापातः। )

इति षष्ठं दृश्यम्।



# अथ सप्तमं दृश्यम्

( ततः समन्त्रि-परिचारक-सदस्य-स्वयंमहाराज-विभूषितायां भोजराजपरिषदि सर्वेषामपेक्षितपण्डितानां प्रवेशः । )

( राजघोषणा नेपथ्ये जायते )

"विप्रोऽपि यो भवेन्मूर्खः स पुराद्बहिरस्तु मे ।
कुम्भकारोऽपि यो विद्वान् स वै तिष्ठतु मे पुरे ॥"

राजमन्त्री—( उत्थाय ) विदितचरैवेयं महराजाज्ञा भवतां यत् संस्कृतज्ञा एवेह राजधान्यां वस्तुमधिकारिणः । तदनभिज्ञा इतो बहिष्कृताः स्युरिति । इयमन्यापि साम्प्रतिकी राजाज्ञा वरीवर्ति यदस्मिन् पाणिनीय-नाटकेऽनिरुद्धप्रवेशाः पौरा इति । अतोऽयं कुविन्दोऽविहतप्रवेशो महाराजं स्वनिवेद्यं निवेदयति भवन्तोऽपि शृण्वन्तु । भण रे भण किं भणेलिमन्ते ?

( गृहीत-तुरी-वेमादि-वयन-सामग्रीकस्य कुविन्दस्य प्रवेशः )

कुविन्दः—महाराज ! ममेयं प्रार्थना महाराजसिंहासन-सविधे ( हस्ते कर्गजं दर्शयन् ) यद् इमे रक्षिणो वृथा मामुद्वेजयन्ति । अहन्तु केवलं संस्कृतज्ञ एव नास्मि

कविरप्यहमस्मि—शृण्वन्तु मे काव्यम्—महाराजाः सपरिषदः—

काव्यं करोमि नहि चारुतमं करोमि
यत्नात्करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ !
हे साहसाङ्क कवयामि वयामि यामि ॥

महाराजः—किं भो मन्त्रिन् ! किमयमपि पुरान्निःसार्यते ?

मन्त्री—नहि महाराज ! केनापि वञ्चितोऽयम् । अये कुविन्द ! त्वं निश्चिन्तस्तिष्ठ नास्ति कापि बाधा तेऽत्र स्थितौ । ( रक्षिमुखो भवन् ) स्वयमुपलभ्य प्रयोगं प्रयुञ्जन्तु न जनश्रुत्या ।

रक्षी—( सलालाटिका ) बाढं बाढम् । एवमेव भवति । त्वरयेदं घटितम् । इति जानन्तु स्वामिपादाः ।

( इति सकुविन्दा रक्षिणो निर्गताः )

राजमन्त्री—अयि सुधियः सभासदः ! महाराज आज्ञापयति यत् सर्वे सूरयः श्रावयन्तु स्वाभिप्रायं पाणिनिप्रतिभाप्रसङ्गे ।

धनपालः—( उत्थाय ) महाराज ! अहन्तु पाणिनेर्न्यायं निभाल्य नितरामानन्दार्णवे निमग्नोऽस्मि ।

महाराजः—तत्कथमित्यस्मान्प्रतिबोधयतु—

धनपालः—दृश्यताम्—'क आस्ते' इत्यादित्रिपादिगे प्रयोगे प्रवृत्तम् 'अकः सवर्णे दीर्घः' ६।१।१०१ इति षाष्ठं वादिसूत्रम् 'पूर्वत्रासिद्धम्' ८।२।१ इति न्यायाधीश-न्यायेन तद् गृहस्थस्यैव 'लोपः शाकल्यस्य' ८।२।१६ इति प्रतिवादिनः सूत्रस्यासिद्धया तद् वादि सूत्रम् 'अकः सवर्णे दीर्घः' इति सत्कृतं भवति । ततस्तदीय-त्यागभावनया स्वयं गृहीतत्यागशिक्षं सत् यकार-व्यवधानेन आत्मनोऽप्रवृत्तिं पश्यन्निवर्तते । इति कियती शिक्षासमाजे समुद्भवति इति द्रष्टव्यम् । तथाहि—गृहागतोऽतिथिः सत्कर्तव्यः । इति शिक्षां 'लोपः शाकल्यस्य' इति प्रतिवादिसूत्रं ददाति । तदुपरि 'पूर्वत्रासिद्धम्' इति न्यायाधीशस्य न्यायमर्य्यादया उपकारिणः प्रत्युपकर्तव्याः । इति शिक्षाम् 'अकः सवर्णे दीर्घः' इति वादिसूत्रं ददाति, सर्वोपरि 'पूर्वत्रासिद्धम्' इति न्यायाधीशस्य स्वगृहस्थानामेवासिद्धिकरणेन स्वपक्षीयेषु त्यागप्रवृत्तिप्रवर्द्धनम् इत्यद्भुतैषा शिक्षा-

शैली । इत्येवं महती लोकशिक्षा महामुनिना प्रयोग-साधनप्रकारेण प्रत्ताऽस्तीति साधूक्तं केनचित्—

'समाजशास्त्रावगतिर्भवेदित-
स्तथेतिहासादिनयादि बुध्यते ।
न केवलेयं पदसिद्धिसंहिता
द्विजत्वसम्पादनसञ्चिकाऽद्भुता' ॥

( इत्युपविष्टः । )

पद्मगुप्तः—( उत्थाय ) महाराज ! अहन्तु पाणिनेर्दुर्बलरक्षा-न्यायेनातीव चमत्कृतोऽस्मि ।

महाराजः—बाढं तर्हि अस्मानपि चमत्कृतान् करोतु तदा तु वयं जानीमः ।

पद्मगुप्तः—पश्यन्तु सर्वे श्रीमन्तः सभासदः 'अग्रेऽत्र' इत्या-दिप्रयोगेषु 'एचोऽयवायावः' ६।१।७८ इत्युत्सर्गस्य प्रवृत्तौ 'एङः पदान्तादति' ६।१।१०९ इति परसूत्रस्य 'निरवकाशो विधिरपवादः' इति लक्षणसंगत्याऽपवाद-विधानेन 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषया सर्वतो बलीयस्त्वविधानं कीदृशं चमत्कारं बिभर्ति । इत्येवं सर्वस्यैव तदष्टकस्य

'उत्सर्गापवादन्यायप्रवृत्त्या' लोकेऽद्भुतोऽयं दुर्वलरक्षान्यायप्रचारो महर्षेः प्रयोगसिद्धिशिक्षया जायते। साधूक्तं केनापि—

अष्टाध्याया अष्टशिक्षा मतास्ते
भूगोलादिप्रक्रियाः पाणिनीयाः।
सर्वैऽपीमेऽध्यायिभिः शीलनीयाः
कण्ठस्थैस्तैर्मूलसूत्रैः क्रमस्थैः॥

(इत्युपविशति)

उव्वटः—(उत्थाय) महाराज! सर्वेऽपि स्वभावानुसारमेवावगाहते पदार्थान्। इत्यहमपि वेदभाष्यप्रणयनप्रसङ्गे पाणिनेर्वैदिकप्रयोगसिद्धिप्रकारेण चमत्कृतोऽस्मि।

महाराजः—तर्हि वैदिकवार्तया अस्मानपि पावयतु भवान्।

उव्वटः—दृश्यतां भवद्भिरपि। पाणिनिर्हि लौकिकप्रयोगसिद्ध्या सहैव वैदिकप्रयोगसिद्धिमपि अनायासत एव सम्पादयति। 'अतो भिस ऐस्' ७।१।९ इति सूत्रेण 'कर्णैः' इति लौकिकः प्रयोगः साध्यते। तस्यैव बाधकेन 'बहुलं छन्दसि' ७।१।१० इति सूत्रेण 'भद्रं कर्णेभिः' इति वैदिकप्रयोगो बहुलमैस्प्रवृत्त्या 'बहु-

वचने झल्येत्' ७।३।१०३ इति सूत्रेण एत्वं कृत्वा साध्यते। इत्यनायासेनैव सर्वत्र लौकिकप्रयोगैः सह वैदिकप्रयोगाणां सिद्धिरपिच्छात्रैर्मध्ये मध्येऽष्टाध्यायी-सूत्राणां क्रमज्ञानेन क्रियते।

इत्यहो पाणिनेर्वैदिकप्रयोगसाधनार्थमपि क्रमविन्यासः, इति भृशमद्भुतोऽयं चमत्कारस्तत्र। अतोऽहं सचमत्कारं क्रमपाठमेव पाणिनेर्हार्दं मन्ये। साधूक्तम् केन चित्—

किं वर्णयामि सुधियः क्रमलोपतो हा
सूत्रस्य दोषनिचयः प्रसृतः समन्तात्।
यत्साम्प्रतं बुधजना न भवन्ति विज्ञाः
शब्दस्य लोकविदितस्य च वैदिकस्य॥

(इत्युपविष्टः)

कालिदासः—(उत्थाय) महाराज! अहन्तु पाणिनेराभीयकसूत्राऽसिद्धिं वीक्ष्य विमुग्धोऽस्मि।

महाराजः—तर्हि तद्बोधनेनास्मानपि कृतार्थयतु भवान्।

कालिदासः—दृश्यतां महाराज! 'शाधि' इति साधनायाभीयसूत्रेषु 'शा हौ' ६।४।३५ इति सूत्रं हौ परे शासः शा इति रूपं करोति। ततः 'हुझल्भ्यो हेर्धिः' ६।४।

१०१ इत्यनेन हेर्धि-कृतौ 'असिद्धवदत्राभात्' ६।४।२२ इति सूत्रं 'शा' इत्यस्यासिद्ध्या 'शास्' इति रूपं निर्माय धि-करणे साहाय्यमाचरति एवम् 'जहि' इति प्रयोगे यदा 'हन्तेर्जः' ६।४।३६ इत्याभीयं सूत्रं हन्तेर्जकारं करोति। तदा 'अतो हेः' ६।४।१०५ इति सूत्रं हेर्लोपार्थं प्रवर्तते तदैव 'असिद्धवदत्राभात्' ६।४।२२ इति सूत्रं जादेशमसिद्धीकृत्य 'हन्' इति दर्शयद् हि-लोपं वारयति। इति कीदृगयमसिद्धिचमत्कारः। तत्र 'शाधि' इति विरचयति। अत्र 'जहि' इत्यस्य वैगुण्यं विरुणद्धि। वदन्तु पाणिनेर्जयम्। अतोऽहं सर्वथा कथयामि—

या कापि माता जनकोऽथवेच्छतां
सुता सुतो मे भवतां सुमेधसौ।
ताभ्यां प्रयत्नाच्चतुरब्दतो जने-
र्घोष्यौ सुतावष्टकमेव केवलम्॥

(इत्युपविशति)

महाराजः—(उत्थाय) भवतां सर्वेषां पाणिनिविषयकमनुरागमुपलभ्य मेऽनुरागो द्विगुणितोऽनुरक्तोऽभूत् तस्मिन्। अहमपि पाणिनिमुनावगाधश्रद्धया

वशीकृतः प्रथममेव एकसहस्रद्विषष्टिमिते संवत्सरे सरस्वतीकण्ठाभरणाभिधं व्याकरणग्रन्थं ग्रथितवान् यत्र पाणिनेर्बहुधा विभक्तस्य सूत्रपाठ-गणपाठ-परिभाषापाठ-लिङ्गानुशासनोणादिसूत्र-फिट्सूत्रादिभागस्य तथा कात्यायन-पतञ्जलि-जयादित्य-वामन-प्रभृति-शाब्दिक-संवर्द्धितस्यापि वार्तिकेष्ट्युपसंख्यानाद्यावश्य-काङ्गस्य समासेन संग्रहं विधाय षट्सहस्रसूत्रसंख्यया अतीव सरलतमा सरणिः प्रदर्शिता। इति प्रसीदति मेऽन्तरात्मा। इत्यतोऽहं मुक्तकण्ठं प्रशंसामि पाणिनिं मुनिम्।

महामुनिः स प्रतिभाप्रवर्द्धिनीं
व्यरीरचद् यां क्रमसूत्रसन्ततिम्।
व्युदस्य तां बौद्धमुखा वुधा मुधा
व्यधुर्दुरूहां क्रमशून्यपद्धतिम्॥

अन्यच्च—

क्रमलोपकरी स्मृतिर्यतो
जटिला हा प्रसृतेह भूतले।
तत एव विलोपमागता
परिपाटी स्वयमर्थदा मुनेः॥

किम्बहुना—

प्रवृत्तापिशलेः कालात्स्वयं सूत्रार्थभृन्नदी ।
तन्निरोधकरी केयं गिरिका बौद्धपद्धतिः ॥

अस्तु अद्यारभ्यापि यदि संस्कृताध्यायिषु चेतना भगवती चरणन्यासं निदध्यात्तर्हि परिष्कृता स्यात् पाणिनिपद्धतिरिति भगवन्तं भवानीपतिमेवार्थये—

श्रुतिमपि गहनां तां शाखया यो जुगोप,
विविधमखिलतन्त्रं स्वात्मनाविश्चकार ।
अवनिमवततार व्याकृतिर्यन्निदाना,
स हि गिरिजनिजानिः पाणिनीयं प्रमृज्यात् ॥

( इति महाराजः शिवं पुष्पाञ्जलिना समर्चयति ।
तत्र जवनिकापातः )

इति समाप्तमिदं भोजराजसभादृश्यं नाम
सप्तमं दृश्यम् ।



## अष्टमं दृश्यम्

( बालिका बालाश्च कापि विद्यालये पाणिनिप्रशस्तिं गायन्तो नृत्यन्ति । तत्रैव कोऽपि राजपुरुषः संस्कृतज्ञोऽपि सन् संस्कृतं वक्तुमसमर्थस्तैः सह हिन्दीभाषां वदति । तास्ते च पद्यैरेव वदन्ति । एवमेव तयोः कथनोपकथनं भवति, यतः श्रोतारोऽपि चमत्क्रियन्ते । )

बालिका बालाः—( गायन्तो नृत्यन्ति )

सूत्रवृत्तिं स्वयं कुर्युरध्यायिनः
पाठनस्य प्रकारोऽयमासीन्मुनेः ।
तद्विहन्त्री पठत्प्राणहन्त्री हृदा,
पद्धतिर्वृत्तिघोषाकरी हीयताम् ॥ १ ॥

निष्क्रमा पाठरीतिः कथं चालिता,
बालबुद्धिर्हलन्त्यं पुरो ग्राहिता ।
वृत्तिघोषा स्मृतिं नाशयत्यादितः
कूपमण्डूकतामानयत्यन्ततः ॥ २ ॥

पाणिनेः पद्धतिर्माङ्गलीसम्मता
वृद्धिरादैजये वृद्धिरादौ मता।
तद्दिशा पाठको वृद्धिमासेवते
शीघ्रमेवार्षबुद्धिः सुधोर्जायते ॥ ३ ॥

राजपुरुषः—ऐ बालिका, बालको क्या गाते हो ?
( अये बालिकां बालाश्च किं गाध्वे यूयम् ? )

तास्ते च—

पाणिनीयां प्रशस्तिं वयं गामहे
बालिकाश्चाथ बालाः समं गामहे।
भारते सा स्वतन्त्रैर्बुधैर्गीयते,
शाश्वती वैदिकी सा स्तुतिर्गीयते ॥४॥

राजपुरुषः—क्यों गाते हो ? कारण बताओ ? ( कथं गाध्वे कारणं कथयत ? )

तास्ते च—

शोभना सा मनोज्ञा मनोहारिणी
माङ्गली मञ्जुला लाभदा पुण्यदा।
प्रक्रमाद्घोषिता वृद्धिमारोहते
सूत्रवृत्तिं स्वयं बालकाः कुर्वते ॥५॥

पुरुषः—तो बहुत अच्छा तो कर रहे हो। पाणिनि-पद्धति की तो सभी ओर से प्रशंसा हो रही है। वह तो अद्भुत पद्धति है। सुनते हैं कि पाणिनि-पद्धति के समर्थन में शब्दशास्त्र के व्याख्याता कुछ विद्वान् स्वर्गवासी होते हुए भी पाणिनि-नाटक के गौरव से पृथ्वी पर आज राजसभा में पधारेंगे।

( तर्हि बहुशोभनं कुरुथ। पाणिनिपद्धतिस्तु सर्वतः प्रशस्यते। सा तु अद्भुता पद्धतिरस्ति। श्रूयते यत् पाणिनि-पद्धतेः समर्थने शब्दशास्त्रव्याख्यातारो बहवो विद्वांसः स्वर्गीया अपि पाणिनिनाटकगौरवादद्य राजसभायां भुवि समुपस्थास्यन्ते। )

तास्ते च—

क तेऽभिधेहि नामतोऽथ कार्यतोऽपि तानहो।
वयं तवास्यपद्मतः समाश्रवे समुत्सुकाः ॥६॥

पुरुषः—हाँ हाँ, मुझे उनके नाम और कार्य याद हैं—स्वर्गवासी जयादित्य वामन, वैसे ही जिनेन्द्रबुद्धि, सशिष्य धर्मकीर्ति, हरदत्त पण्डित, भट्टोजिदीक्षित तथा वरदराज भट्टाचार्य अपनी-अपनी गुप्त बातें बतावेंगे और पाणिनि जी के प्रति श्रद्धा-भक्ति प्रकट करेंगे। अन्त में

नागेशभट्ट भी पाणिनि जी की परिभाषाओं की प्रशंसा करेंगे। चलो चलो, तुम लोग भी इन स्वर्गीय आत्माओं के दर्शन करो। वहीं भारतमाता के भी दर्शन होंगे। एक पन्थ दो कार्य हो जायगा।

( अहो अहं तान्नामतः कार्यतोऽपि जानामि। स्वर्गिणौ जयादित्यवामनौ, तथैव जिनेन्द्रबुद्धिः, सशिष्यो धर्मकीर्तिः, हरदत्तपण्डितः, भट्टोजिदीक्षितो वरदराजश्चेति स्वस्वगुप्तं रहस्यं प्रकाशयिष्यन्ति। पाणिनिमुनौ च स्वश्रद्धाभक्तिमुद्गरिष्यन्ति। अवसाने च नागेशभट्टोऽपि पाणिनिपरिभाषा-प्रशंसां करिष्यति। चलत चलत, यूयमपि दिव्यात्मन इमान् पश्यत। तत्रैव भारतमातुरपि दर्शनं भविष्यति। 'एका क्रियाऽर्थद्वयकृत् प्रसिद्धा' स्यात्। )

ते ताश्च—बाढं बाढं वयन्तु एतदेव चिन्तयामो यद् बौद्धधर्मकीर्तिप्रवर्तितेयं निष्क्रमा पाठरीतिः कथं दीक्षितादिमहापण्डितगणैरादृता? अस्तु, जयादित्यादिविद्वद्गणैः सह भारतमातुर्दर्शनमित्ययं महाँल्लाभोऽस्माकम्, तर्हि सर्वे वयं तत्रैव चलामः।

आश्चलामश्चलामश्चलामो वयं
बालकाः संस्कृतज्ञा महाकौतुकाः।

धर्मकीर्तिप्रमुख्या बुधा दीक्षिताः
श्रद्धया तत्र पश्याम किं कुर्वते ॥७॥

चिन्तयामोऽधुना बालका वै वयं,
धर्मकीर्तिप्रमुख्या बुधा दीक्षिताः ।
पाणिनीयाधमर्णा अहो ते कथं
सन्त्यजेयुस्तदीयां शुभां पद्धतिम् ॥८॥

आकुमारं यशः पाणिनेरद्भुतं
किं वदामो वयं बालकाः साम्प्रतम् ।
सूत्रधात्विष्टिलिङ्गैर्गणैरन्वितं
वार्तिकैः पूरितं पाणिनीयं मतम् ॥९॥

( इति निष्क्रान्ताः सर्वे जवनिकापातेन )

( ततो बौद्धराजसंसदि सिंहासनासीने महाराजे मन्त्रिगण-मण्डिते जयादित्य-वामन-सूरिजिनेन्द्रबुद्धि-सशिष्यधर्म-कीर्तिप्रभृतयः समुपविष्टा बौद्धवेशे । )

राजमन्त्री—( उत्थाय ) अये महाविद्वांसः स्वर्गावतीर्णानां श्रीमतां स्वागतेन समृद्धश्रियामस्यां संसदि भवन्तः स्व-स्वाभिमतं पाणिनिशब्दानुशासनानुगतं प्रकाशयन्तु प्रकाममिति महाराजादेशः ।

जयादित्यः—( उत्थाय ) अयि देशविदेशगा राजसंसदि समुपस्थिताः सुधियः ! सावधानाः शृण्वन्तु—पञ्चमशतिकेन जयादित्येन मया, श्रीमतां पाणिनि-कात्यायन-पतञ्जलिपादानामुपरि स्फुरता पर्याप्तप्रेम्णा इतस्ततो यत्र तत्र सर्वत्र प्रकीर्णानां तदीयोपदेशरत्नानां संग्रहं सम्पाद्य सम्पूर्णस्यैव पाणिनीयाष्टकस्य काशिकानाम्नी विस्तृता वृत्तिर्विरचिता । तद्वृत्तिविषयश्च तदीयोपक्रमपद्याभ्यामेवोपपाद्यते, तथा हि—

वृत्तौ भाष्ये तथा धातुनामपारायणादिषु ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसंग्रहः ॥१०॥
इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्थौ ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥११॥

इति पद्यद्वयेन भवन्तो मेऽभिप्रायमभिप्रयन्तु । पाणिनिसूत्राणां पठन-पाठन-प्रकारोऽपि वैज्ञानिको विशदीकृतोऽयमवधार्यः पटुभिर्बटुभिः ।

सम्प्रघुष्य क्रमात्पाणिनीयाष्टकं
सन्धिबोधात्पदच्छेदतोऽर्थं क्रियात् ।
पूर्वसूत्रं परस्मिन् समासञ्जयन्
निर्विशेषाञ्जहत्तद्विभक्तिं समाम् ॥१२॥

पूर्वसूत्रं परस्मिन् समासज्जदा-
स्वाधिकारावधिं शृङ्खलावृद्धितः ।
तत्समानं पदं स्वं जहद्धीतरत्
सर्वमेवोपहारीकरोत्यादरात् ॥ १३ ॥

किन्तु तत्रापि चेद्यद्विशेष्यादिकं
तत्समानं पदं चापि याति स्वतः ॥
इत्थमाविष्करोत्यर्थसत्यद्भुतं
यो न जन्मावधि क्वापि विस्मर्यते ॥१४॥

( इत्युपविशति )

वामनः—( उत्थाय ) अयि भो विद्वांसः ! श्रुतं भवद्भिर्जयादित्यमहोदयस्य निवेदनम् । मयाऽपि एतदेव वक्तव्यं यदावाभ्यां द्वाभ्यामपि पूर्वाचार्यविरचिताः सर्वा वृत्तीर्विलोक्य सम्पूर्णस्यापि पाणिनीयाष्टकस्य पृथक् पृथक् सम्पूर्णा वृत्तिर्विरचिता आसीत् । तत्र कथमेषा पञ्चमाध्यायान्ता जयादित्यमहोदयस्य ततोऽग्रे षष्ठतोऽष्टमाध्यायान्ता मम वामनस्य जातेति आवाभ्यामेव न विज्ञायते । पाणिनीयाष्टकसम्बन्धे तु मे निश्चितं मतम् इदमस्ति यत्—

सदाऽध्येया सर्वैर्निगमसदृशी पाणिनिमुने-
रहो! अष्टाध्यायी झटिति पद-बोधप्रणयिनी ।
सुपूर्णा वैज्ञानी ध्रुवमतिशयाऽऽह्लादजननी
स्वयं स्वार्थं ब्रूते क्रमनियमपाठेन सुगमा ॥१८॥

( इत्युपविशति )

जिनेन्द्रबुद्धिः—( उत्थाय ) अयि महाराज ! सप्तमशतिकोऽहं बौद्धदीक्षादीक्षितोऽपि श्रीमत्पाणिनिमुनिप्रभाव-परवशस्तदीयाष्टकस्य चतुरस्रां वृत्तिं काशिकां विलोक्य विमुग्धः काशिकाविवरणपञ्जिकाऽपरनामानं विस्तृतं न्यासग्रन्थमरीरचम् । समासतः शृण्वन्तु सर्वेऽपि भवत्पारिषद्याः–विद्याविदग्धाः ।

निबद्धाऽद्भुता काशिकावृत्तिरेषा
यतो ज्ञायते पाणिनीयं रहस्यम् ।
तदीयं मया सूक्ष्ममर्थं विबोद्धुं
प्रयत्नः कृतो न्यासनाम्नाऽदरेण ॥

अन्यच्च न्यासवैशिष्ट्यं विद्वद्भिरिदं वेदितव्यम्—

प्रयोगसिद्धिं कुरुते क्रमेण
सूत्रार्थमर्मस्फुटिमातनोति ।

छात्रैः स्वयं न्यास उपासनीय-
स्तां काशिकां वृत्तिमवैतुकामैः ॥ १७ ॥

( इत्युपविष्टः )

धर्मकीर्तिः—सशिष्यः ( उत्थाय ) प्रियवत्सराहुल ! साम्प्रतिकानां खवेदरस(६४०)शतकस्थितानां बौद्धविदुषां मोहं वीक्ष्याऽहं भृशमुद्विग्नोऽस्मि । किं करोमि । त्वं किमत्र वक्षि ? किं मन्यसे ? चेति अहं ज्ञातुमिच्छामि ।

शिष्यः—उपाध्यायाः ! स्फुटं कथयन्तु । तदाहं तदुपायमावेदयामि । सम्प्रति तु भवदभिप्रायमेव नावबुध्ये ।

धर्मकीर्तिः—किमन्यद्, इदमेव, यदिमे शाब्दिकाः पाणिनिप्रभावपरवशास्तदष्टाध्यायीपाठनिमग्ना अनिच्छन्तोऽपि हठाद् वेदमपि पठन्ति, पाठयन्ति । परन्तु मत्पद्धतिप्रवर्तितरूपावतारग्रन्थप्रिया न भवन्तीति ।

शिष्यः—तर्हि का चिन्ताऽत्रोपाध्यायानां स्व-सभायां कस्याञ्चिदुपस्थितान् सर्वान् बौद्धविदुषो बोधयन्तु उपाध्यायाः । यदष्टाध्यायीपाठेऽस्माकं बौद्धानामिमे इमे दोषाः समुद्भवन्ति । अतो नैवं करवाम । किन्तु—रूपावतारपद्धतिगा एव भवाम इति ।

धर्मकीर्तिः—साधु वत्स! साधु, साधु मां विबोधितवानसि। यद्यपि–एतत्कथने स्वात्मप्रशंसादोषः समुद्भवति तथापि किं कर्त्तव्यं यथा वा स्यात् तथा स्वसिद्धान्तरक्षा तु कर्तव्यैव। अस्तु–(सभाभिमुखो भूत्वा) अयि भो बौद्धदीक्षादीक्षितास्तच्छिक्षाशिक्षिताश्च विद्वांसश्छात्रा उभयेऽपि–शृण्वन्तु। महाराजाज्ञया बुद्धिमतो भवतोऽहमितो निवेदयामि मितमेव किञ्चित्। वयं सर्वेऽपि बुद्धदेवपथपथिका वेदमवजानन्तोऽपि हठादष्टाध्यायीप्रभावाद्वेदं पठामः पाठयामश्च। अतोऽहं अष्टाध्यायीतो वेदसूत्राणि हायं हायं मूर्धाभिषिक्तोदाहरणानि लौकिकसूत्राणि सञ्चित्य रूपावताराभिधं प्रक्रियाग्रन्थं विरचितवान्। तं भवद्भ्य उपहरामि एतदध्ययनाध्यापनेन लौकिकप्रयोगज्ञानमाशु सम्पादितं स्याद् वेदाडम्बराहिण्डनायासो भवतां सर्वथा व्यपगतः स्यादित्यवदधतु सर्वे। परन्तु पाणिनिसूत्राणि मद्गृ-हीतानि तदष्टकक्रमेणैव कण्ठस्थीकार्याणीति मेऽनुल्लङ्घनीय आदेशः। यतो हि पाणिनिसूत्राणि शुद्धस्फटिकवत् क्रम-प्रतिष्ठितानि। तत्र क्रमे क्वापि कदापि कथमपि विस्मृतिर्न विधेया।।

श्रूयताम्—

क्रमोपबन्धेऽप्यथ लाघवे मुने-
स्तपःप्रकर्षप्रतिभापरिश्रमौ ।
विलोक्य मुग्धोऽस्मि च वक्तुमक्षमो-
ऽप्यतो भवेयुः क्रमपाठकाः समे ॥१८॥
आः क्रमः सूत्रराशेर्निबद्धोऽद्भुतो
येन सूत्रार्थवृत्तिः स्वयं सृज्यते ।
हा विलुप्तो भवेत् तत्क्रमध्वंसतः
पाणिनेराशयस्थोत्तमार्थक्रमः ॥१९॥

( इत्युपविशति )

राजमन्त्री—( उत्थाय ) अहो भवतामनेनानुग्रहेण वयं सर्वेऽपि भृशमनुगृहीता आत्मानं कृतकृत्यं मन्यामहे । भवतश्च महाधियः सुधियः साधुवादैरभ्यर्चयामहे । सम्प्रति वैदिकाचाराश्रितदीक्षितादिविदुषां प्रवेशनिमित्तादियं सभा वैदिकसनातनधर्मसंरक्षकनृपसभारूपे परिणमते । इति क्षणं विरामो रङ्गस्य सद्यः ।

( इति निष्क्रान्ताः सर्वे । जवनिकापातः )

( ततो दाक्षिणात्यवेशवेष्टिते ससचिवे राज्ञि सपरिवारे सिंहासनासीने हरदत्तपण्डितः सशिष्यो भट्टोजिदीक्षितो नागेशभट्टादयश्च क्रमोपविष्टा एव रङ्गे जवनिकोत्तोलनेन प्रवेशिताः स्युः )

राजसचिवः—( तत उत्थाय ) अयि भोः सुधियः सभासदः पाणिनीयनाटकानुरोधात् स्वर्गावतीर्णानां हरदत्तादिविदुषां प्रवेशप्रिया तदनुकम्पानुकम्पिता चेयं परिषत्तान्सर्वानेवाभ्यर्थयते क्रमेण स्वाभिप्रायं विवरीतुम् ।

( इत्युपविशति )

हरदत्तपण्डितः—( उत्थाय ) अये श्रौतस्मार्तधर्माचाररक्षाबद्धकक्षाः ससचिवा महाराजाः ! भवदाश्रिताश्च शाब्दिकशिरोमणयः सुधियः ! श्रूयतां सर्वैः—

प्रक्रियातर्कगहनप्रविष्टो हृष्टमानसः ।
हरदत्तहरिः स्वैरं विहरन् केन वार्यते ॥२०॥

अतोऽहं पाणिनिप्रभावप्रभावितोऽमुष्याष्टकस्य सपरिकरस्य मर्मप्रकाशिकायाः काशिकायाः सर्वार्थोपन्यासे न्यासे स्थितेऽपि—

विमुग्धो मुनेः प्रक्रियां वीक्ष्य लघ्वीं
क्रमाध्यायिनां सर्वसौविध्यदात्रीम् ।
स्वकीयं मतं यत्र तत्र प्रयुञ्ज-
न्नकार्षं मुदा मञ्जरीं काशिकायाः ॥२१॥

सभासदः—साधु साधु ।

हरदत्तः—समासतोऽवधीयताम्—

किं वच्मि पाणिनिमुनेः सरलं प्रकारं
बालाः पठन्ति मुदिता अपि बालिकाश्च ।
तच्छ्रद्धयाऽस्मि वशगः किल काशिकाया
न्यासे स्थिते रचितवान् पदमञ्जरीं ताम् ॥२२॥

( इत्युपविष्टः )

( ततो भट्टोजिदीक्षितः तच्छिष्यो वरदराजश्चोत्थाय दाक्षिणात्यवेशौ चङ्क्रममाणौ सँल्लपतः ) ।

भट्टोजिदीक्षितः—प्रिय शिष्य वरदराज ! या हि अस्मत्सम्बन्धे जनभ्रान्तिरस्ति—'यदिमेऽष्टाध्यायीविरुद्ध-पद्धति-प्रचारकाः' इति, सा तु दूरीकरणीयैव । यतो हि—
'अतथ्यस्तथ्यो वा हरति महिमानं जनरवः' ।

वरदराजः—गुरुपादाः ! अहं समर्थये भवदीयं मतम् । प्रथमतो भवन्तः स्वतन्त्रं स्वमतं प्रकाशयन्तु । तदनन्तरमहमपि स्ववाङ्मार्जन्या सर्वात्मना सम्मार्ज्य जनभ्रान्तिमपनेष्यामि दूराद् ।

भट्टोजिदीक्षितः—साधु वत्स ! साधु समर्थितवानसि । अयमेव मार्गो जनभ्रान्तिविभेदाय वरीयान् इति । तद्वयं स्व-स्व-वचसैवेमामपनयामः । तत्पूर्व-

महमभिदधामि पश्चात् त्वयापि वाच्यम् । (सभाभिमुखो भूत्वा) भो भो महाराजोपासकाः सभासदः! शृण्वन्तु भवन्तो मे हार्दम् । मया हि बौद्ध-धर्मकीर्तिप्रवर्तितरूपावतारप्रक्रियाप्रश्रयेण प्रणीताया रामचन्द्रदीक्षितप्रक्रियाकौमुद्याः पद्धत्या सम्पूर्णापि अष्टाध्यायी परिष्कृता । कृष्णयजुर्वेदिनो वयं तैत्तिरीय-शाखिनो ब्राह्मणाः । अस्माकं मज्जन्येवाखिलोऽप्यष्टा-ध्यायीपाठस्तिष्ठति । कर्णौ स्फारीकृत्य ये केऽपि वाञ्छेयुस्ते पुनः पुनराकर्णयन्तु—

अस्मद्वंशे वेदपाठेन साकं
बालाः सर्वेऽधीयते पाणिनीयम् ।
विप्रा ज्ञेयाः पाणिनीयाधमर्णाः
श्रौतस्मार्तास्तैत्तिरीयश्रुतिष्ठाः ॥ २३ ॥

वयं वै तु पैतामहादिक्रमेणा-
ष्टकं पाणिनेः पाठयामः पठामः ।
सदैवेयमायाति रीतिः कुले नः
प्रमाणं प्रणीता मया कौमुदीयम् ॥२४॥

शब्दकौस्तुभावसाने सुदृढोऽयं व्याकरणस्यान्तिम-सिद्धान्तग्रन्थो मया ग्रथितः । घुष्टाष्टाध्यायीका एतदाश्र-

येण विनिर्मितसूत्रवृत्तिकाः छात्राः स्वयंकृतपदसिद्धिका भूत्वा भाष्याश्रयेण महावैयाकरणा भविष्यन्ति, इति मेऽभिप्रायः सुदृढः। मम तु स्वप्नेऽपि नासीदिदं यदष्टाध्यायीमघुषित्वैव मे सिद्धान्तकौमुदीं पठिष्यन्ति। सा च प्रचलितायां राज्य-शासन-परीक्षायां मध्यम-परीक्षा-पाठ्या भविष्यतीति। अतस्त एवात्र दोषिणः पाणिनिविद्वेषिणः छात्रप्राणघातिनश्च, ये विनाष्टाध्या-यीघोषं तत्रापि च मध्यम-परीक्षायां मे सिद्धान्त-कौमुदीं पाठयन्ति च्छात्रान्, तेऽपि चानभिज्ञा एव च्छात्रा येऽनेन भ्रष्टक्रमेण मे सिद्धान्तकौमुदीं पठन्ति। भूयो भूयो भूरिशः कर्णौ स्फारीकृत्याकर्णयन्तु कर्णवन्तो भवन्त आकर्णनीयमिदम्—

ग्रन्थो मदीयोऽन्तिम ईरितोऽयं
सवार्तिको भाष्यनयानुसारी।
सिद्धान्तबुद्ध्या रचितः प्रयत्नाद्
यः पाणिनेरष्टकपाठपाठ्यः॥ २९॥

(इत्युपविष्टः)

वरदराजः—(उत्थाय भूमौ दक्षिणपादं प्रहरन् उच्चैः स्वरेण) भो भो भारतीया भ्रातरः श्रुतो भवद्भिर्मे

गुरोर्गरीयान् गिरामुद्गारः । गृहीतस्तदीयोऽमितो गर्भितोऽभिप्रायः । नास्ति मे एतदग्रे किञ्चिन्निगाद्यं गद्यमनवद्यम् । अहन्तु श्रीरामचन्द्रविलापं विलप्यैव विरमामि विस्तरात्—

"यच्चिन्तितं तदिह दूरतरं प्रयाति
यच्चेतसापि न धृतं तदिहाभ्युपैति ।
प्रातर्भवामि वसुधाधिप-चक्रवर्ती,
सोऽहं व्रजामि विपिने जटिलस्तपस्वी" ॥२६॥

पाणिनेरधमर्णैरस्माभिस्तदष्टकसूत्राधारम् एतद्बुद्ध्या ग्रन्था ग्रथिता यत्—

पठित्वाऽष्टकं पाणिनेः प्रक्रमेण,
ततः स्युः सुबुद्धा अधीतैरमीभिः ।
नहि ज्ञातमस्माभिरग्रेतनैर्नः,
करिष्यन्ति मूले कुठाराभिघातम् ॥२७॥

अपरञ्च—स्वगुरोः सिद्धान्तकौमुदीकृते लघुकौमुदी-मध्य-कौमुदी-सोपानं समर्पयता मया स्फुटमेव स्वपाणिनीयाधमर्णता ध्वनिता—'सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र' इति । किमिदं कर्म, विनाष्टाध्यायीक्रमपाठं भवितुमर्हति ? अतो हि—

न वै वयं पाणिनिपद्धतिद्रुह-
स्त एव वाच्या य इहाविवेकिनः ।
विनाष्टकज्ञानमधीति-हस्तयोः
समर्पयन्ते लघुकौमुदीं पुरः ॥ २८ ॥

अवसानेऽहं स्वनिवेद्यं निवेद्य निर्गच्छामि निलयात् ।

अष्टाध्याय्याः पाठनेनैव पाठ्या
येऽपि ग्रन्थाः पाणिनेः सूत्रमूलाः ।
ईशोपज्ञप्रक्रियापाठबद्धाः
सर्वे धीराः पाणिनीयाधमर्णाः ॥ २९ ॥

( इत्युपविष्टः )

नागेशः—( उत्थाय ) दाक्षिणात्योऽहं, मया महर्षेः पाणिनेः पाण्डित्यप्रभाव-परवशेन भाष्यप्रदीपं प्रद्योतयताऽपि शब्देन्दुशेखरादिनाऽप्रत्यक्षतस्तं सेवमानेनानतिसान्निध्याच्च, अपरितुष्यता तदीयपरिभाषाभक्तिपरितुष्टेन श्रीभैरवमिश्र-सम्पादित-पाणिनीय-परिभाषा-संग्रहव्याख्यारूपं परिभाषेन्दुशेखरं विरचय्य साक्षात्सेवितो भगवान् परिबृंहितश्च, किम्बहुना, शृण्वन्तु मे पारिभाषिकं गानम्—

परनित्यान्तरङ्गादिप्रमाणैरपवादिका ।
कार्यकालयथोद्देशप्रवृत्तिर्बहुधा मता ॥ ३० ॥

अहो ! अद्भुतः पारिभाषः प्रभावो
विलोक्यो बुधैः पाणिनेः प्रक्रियायाम् ।
स्वसंख्यास्तु या स्वल्पिकाऽब्ध्यग्निचन्द्रा
प्रभावेऽतिवृद्धिं गताऽगम्यरूपा ॥ ३१ ॥

अहा हा ! अवाच्योऽस्ति महिमा आद्यशक्त्या भगवत्या भवान्या इव परिभाषायाः । तथाहि—

विधिं प्रयोगेषु नियुञ्जती क्वचित्
क्वचित्तमेवोज्झती मनस्विनी ।
यथादिशक्तिः परिभाषिकाऽद्भुता
प्रवर्तते लक्ष्यजगद्धितैषिणी ॥

( इत्युपविशति )

महाराजः—( उत्थाय ) अहो भवन्तः सर्वेऽपि महार्हे महर्षौ स्वानुरागमुद्गिरन्तस्तदष्टकप्रचारे सर्वथा आपातालं जयस्तम्भं निखातवन्तः । इति सर्वेभ्यो भवद्भ्यो भूयांसो धन्यवादाः । उच्यतामेकस्वरेणोच्चैः महर्षिपाणिनिर्विजयताम् । ( इति त्रिरुच्चैरुद्घोषयति )

अन्ये— ( उच्चैः ) विजयताम् ! ! !

महाराजः—महर्षिः पाणिनिर्विजयताम् !

पुनरन्ये—विजयताम् ! ! !

महाराजः—महर्षिः पाणिनिर्विजयताम् !

पुनरन्ये—विजयताम् ! ! !

( जवनिकापातेन सर्वे निष्क्रान्ताः )

इति पाठशालीयबालिकाबालादिवरदराजान्तम्

अष्टमं दृश्यं समाप्तम् ।

—oo:o:oo—

## नवमं दृश्यम्

( ततो भारतमाता प्रविशति धान्यमञ्जरीमण्डितत्रिशूलहस्ता सिंहासनोपविष्टा परितो ध्वजोत्तोलं तत्तत्परिच्छदाभिर्बालाभिर्बालैश्च स्तूयमाना जवनिकोत्तोलनेन )

बाला बालिकाश्च—( सध्वजोत्तोलनम् )

'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नीअहमश्विनोभा ॥' ( ऋग्वेदः )

'आर्या ओमिति यां स्तुवन्ति विबुधा
ओगाडितीशानुगाः ।
अल्लाहेति मुहम्मदीयमतगा
बौद्धास्तु बुद्धां विदुः ।
अर्हन्तीं जिनगा अहूरमजदां
यां पारसीका जगुः,
सिक्खाः 'सत्-श्रिअकाल' इत्यभिदधु-
स्सा ऽऽद्या शिवा पातु नः' ॥

'वन्दे मातरमादिसृष्टिजननीं धातृप्रपञ्चाद्भुतां,
भास्वच्छुभ्रहिमालयोज्ज्वलमणिप्रोद्यच्छिरोभूषणाम्।
पारावारविहारवीचिविलसन्मञ्जीरझङ्कारिणीं,
देवीं भारतभूमिकां जलफलप्राद्यप्रसूसुस्थलीम् ॥'

भारतमाता—(शिरस्थधान्यमञ्जरीक-त्रिशूलहस्ता उत्थाय) अहं मूलत एव प्रशमवतां भवतां सकलमभिनयमभिलक्ष्य नितरां मुदितास्मि। समेऽपि सोत्साहमहमहमिकया स्व-स्वाभिनयकर्मणा जनतायां स्वकर्तव्यपालनं 'धर्मसारः' इति शिक्षारहस्यं प्रसारयन्तो भवन्तो मां सेवितवन्त इति सततमभिवर्द्धन्ताम्। इह भारते मदङ्के वाल्मीकिप्रभृतयः कवयः, मर्यादापुरुषोत्तमावताररामचन्द्रसदृशा राजानः, कणादप्रमुखा दार्शनिकाः, मनुसम्मिताः समाजधर्मशास्त्रिणश्चाणक्यादयो नीतिविदः, शङ्कराचार्यसदृक्षा आचार्या यथा प्रादुरासन्, तथैवायं पाणिनिरपि शिक्षाविज्ञाननिधिः प्रादुर्बभूवेति पाणिनिशब्दः प्रकाशते। अतश्च स्वातन्त्र्यप्रियस्य स्वतन्त्रप्रज्ञस्य सूक्ष्मेक्षिकस्य आचार्यत्वसम्पादकस्य सुमेधसोऽस्य ग्रन्थाश्रयेणैव शब्दशास्त्रमभ्यसनीयम्, श्रुतमिदं सर्वैरन्यदपि—

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि न परेषां समाचरेत् ॥ इति ।

किं वो भूयः प्रियमुपहरामि ।

पाणिनिः—किमतः परमपि प्रियमस्ति ? तथापीदमस्तु—

( सर्वे सम्मिल्य गायन्ति )

निगमसहृदशमेतत्पुण्यदं पाणिनीयं
प्रियतमजनवृन्दं यत्नतः पाठनीयम् ।
फलमिह पदबोधे लाघवं साधनीयं
द्विजकुलमपि मेधावर्द्धनं ज्ञापनीयम् ॥

इति नवमं भारतमातृ-दृश्यं समाप्तम् ।

इति श्रीचैमधरि-कौशल्याज-श्रीगोपालशास्त्रिणा दर्शनकेश-
रिणा पण्डितराजेन व्याख्यानवाग्मिना विहारराज्या-
भिजनेन विरचितं पाणिनिप्रशस्तिपराभिधानं
नाम पाणिनीयं-नाटकं समाप्तम् ।

शुभं भूयात् ।



